## नान्दीश्राद्धम्

संकल्पः —देशकालौ संकीर्त्य, करिष्यमाण-धूमावतीप्रतिष्ठा-कर्माङ्गत्वेन नान्दीश्राद्धं करिष्ये।

आचार्य पूर्व दिशा की ओर विश्वेदेव के आसन स्थान पर कुशा उत्तराग्र रक्खे तथा तीन आसन दक्षिण पूर्वाग्र क्रमानुसार रखें। आसनों की दूरी अधिक न हो, केवल आसन एक दूसरे से आपस में सटे न रहें। यजमान से उन स्थापित आसनों पर आचार्य विश्वेदेव सहित उसके पितरों की पूजा निम्न प्रकार सव्य से ही आरम्भ करवायें, आचार्य यजमान से ही उसके मस्तक और श्राद्धसामग्री पर पवित्रीकरण हेतु निम्न श्लोक द्वारा जल छिड़कवायें—

**ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा।**
**यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः॥**

**ॐ पुण्डरीकाक्षः पुनातु, ॐ पुण्डरीकाक्षः पुनातु, ॐ पुण्डरीकाक्षः पुनातु।**

आचार्य पादप्रक्षालनार्थ के लिए निम्न क्रमानुसार यजमान से जल प्रदान करवायें—**ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः। ॐ मातृ-पितामही-प्रपितामह्यो नान्दीमुख्यः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादवनेजनं पादप्रक्षालनं वृद्धिः। ॐ पितृ-पितामह-प्रपितामहाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः। ॐ मातामह-प्रमातामह-वृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः। इत्युक्त्वा सर्वत्र पात्रे सकुशयवाक्षतजलं प्रक्षिपेत्।**

तदुपरान्त यजमान के पितरों के निमित्त आचार्य निम्न क्रम से आसन प्रदान करावें—

**ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः ॐ भूर्भुवः स्वः इमे आसने वो नमो नमः। नान्दीश्राद्धेक्षणौ क्रियेतां यथा प्राप्नुवन्त्यो**

भवन्त्यः तथा प्राप्नुवामः। मातृ-पितामही-प्रपितामह्यः नान्दीमुख्यः ॐ भूर्भुवः स्वः इमे आसने वो नमो नमः। नान्दीश्राद्धेक्षणौ क्रियेतां यथा प्राप्नुवन्त्यो भवन्त्यः तथा प्राप्नुवामः। ॐ पितृ-पितामह-प्रपितामहाः नान्दीमुखाः ॐ भूर्भुवः स्वः इमे आसने वो नमो नमः। नान्दीश्राद्धेक्षणौ क्रियेतां यथा प्राप्नुवन्त्यो भवन्त्यः तथा प्राप्नुवामः। ॐ मातामह-प्रमातामह-वृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः ॐ भूर्भुवः स्वः इमे आसने वो नमो नमः। नान्दीश्राद्धेक्षणौ क्रियेतां यथा प्राप्नुवन्त्यो भवन्त्यः तथा प्राप्नुवामः।

यजमान से पितरों के निमित्त जल, वस्त्र, यज्ञोपवीत, रोली, अक्षत, पुष्प, धूप, नैवेद्य, ऋतुफल, ताम्बूल, लवङ्ग, इलायची, सुपारी तथा सुगन्धित इत्र आदि निम्न क्रमानुसार आचार्य प्रदान करावें—

ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः। ॐ मातृ-पितामही-प्रपितामह्यः नान्दी-मुख्यः ॐ भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः। ॐ पितृ-पितामह-प्रपितामहाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः। ॐ मातामह-प्रमातामह-वृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः।

यजमान से विश्वेदेव सहित पितरों के निमित्त भोजन निष्क्रय की दक्षिणा निम्न क्रमानुसार आचार्य प्रदान करावें—

ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं युग्मब्राह्मणभोजन पर्याप्त आमान्ननिष्क्रयभूतं द्रव्यम् अमृतरूपेण स्वाहा सम्पद्यतां वृद्धिः। ॐ मातृ-पितामही-प्रपितामह्यः नान्दीमुख्यः ॐ भूर्भुवः स्वः इदं युग्मब्राह्मणभोजन पर्याप्त आमान्ननिष्क्रयभूतं द्रव्यम् अमृतरूपेण स्वाहा सम्पद्यतां वृद्धिः। ॐ पितृ-पितामह-प्रपितामहाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं युग्मब्राह्मणभोजन पर्याप्त आमान्ननिष्क्रयभूतं द्रव्यम् अमृतरूपेण सम्पद्यतां वृद्धिः। ॐ मातामह-प्रमातामह-वृद्धप्रमातामहाः

**सपत्नीकाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं युग्मब्राह्मणभोजनपर्याप्तम् आमान्ननिष्क्रय-भूतं द्रव्यम् अमृतरूपेण स्वाहा सम्पद्यतां वृद्धिः।**

यजमान से निम्न क्रमानुसार दुग्धादिसहित यवादि आचार्य प्रदान करावें—

**स-क्षीरयवकुशजलदानम्—ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः प्रीयन्ताम्। ॐ मातृ-पितामही-प्रपितामह्यः नान्दीमुख्यः प्रीयन्ताम्। ॐ पितृ-पितामह-प्रपितामहाः नान्दीमुखाः प्रीयन्ताम्। ॐ मातामह-प्रमातामह-वृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः प्रीयन्ताम्। ततः 'अघोराः पितरः सन्तु' इति पूर्वाग्रां जलधारां दद्यात्।**

यजमान से जल, पुष्प, अक्षतादि निम्न क्रमानुसार आचार्य प्रदान करावें—

**ॐ शिवा आपः सन्तु, ॐ सौमनस्यमस्तु, ॐ अक्षतं चाऽरिष्टं चाऽस्तु।**

यजमान से उसके सभी पितरों के निमित्त दाहिने हाथ के अँगूठे की ओर से इस वाक्य द्वारा आचार्य जलधारा प्रदान करावें—**ॐ अघोराः पितरः सन्तु।**

यजमान से दोनों हाथ जुड़वाकर उसके पितरों की निम्न क्रमानुसार आचार्य प्रार्थना करावें—

**ॐ गोत्रन्नो वर्धतां दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च। श्रद्धा च नो मा व्यगमद् बहु देयं च नोऽस्तु। अन्नं च नो बहु भवेद तिथींश्च लभेमहि। याचितारश्च नः सन्तु मा च याचिष्म कञ्चनः॥ एताः सत्या आशिषः सन्तु।**

प्रतिष्ठास्थल पर उपस्थित आचार्य सहित सभी ब्राह्मण यजमान को निम्न वाक्य द्वारा आशीर्वाद प्रदान करें—**सन्त्वेताः सत्या आशिषः।**

यजमान से विश्वेदेव सहित पितरों के निमित्त आँवला, मुनक्का, यव तथा आदी मूलादि अलग-अलग आगे दिए हुए क्रमानुसार आचार्य वितरण करावें—

ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः ॐ भूर्भुवः स्वः कृतस्याभ्युदयिकस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षाऽऽमलकयवमूलनिष्क्रयिणीं दक्षिणां दातुमहमुत्सृज्ये। ॐ मातृ-पितामही-प्रपितामह्यः नान्दीमुख्यः ॐ भूर्भुवः स्वः कृतस्याभ्युदयिकस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षाऽऽमलकयवमूलनिष्क्रयिणीं दक्षिणां दातुमहमुत्सृज्ये। ॐ मातामह-प्रमातामह-वृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः ॐ भूर्भुवः स्वः कृतस्याभ्युदयिकस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षाऽऽमलकयवमूलनिष्क्रयिणीं दक्षिणां दातुमहमुत्सृज्ये।

माता पितामही चैव तथैव प्रपितामही।
पिता पितामहश्चैव तथैव प्रपितामहः॥
मातामहस्तत्पिता च प्रमातामह कस्तथा।
एते भवन्तु मे प्रीताः प्रयक्षन्तु च मङ्गलम्॥

आचार्य और ब्राह्मण निम्न मन्त्रों का उच्चारण करें—

ॐ इडामग्ने पुरुदर्ठ० सर्ठ० सनिंगोः शश्वत्तमर्ठ० हवमानाय साध। स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्त्वस्मे॥ १॥ उपास्मै गायता नरः पवमानायेन्दवे। अभि देवाँ२॥ इयक्षते॥ २॥

नान्दीश्राद्ध की सम्पन्नता हेतु यजमान निम्न वाक्य का उच्चारण करते हुए आचार्य से पूछें—**अनेन नान्दीश्राद्धं सम्पन्नम्?** उपरान्त आचार्य तथा अन्य उपस्थित ब्राह्मण यजमान से आनन्दपूर्वक निम्न वाक्य कहें—**निश्चितं सुसम्पन्नम्।**

## विसर्जनम्

ॐ वाजेवाजेऽवत वाजिनो नो धनेषु विप्रा ऽअमृता ऽऋतज्ञाः। अस्य मद्ध्वः पिबत मादयद्ध्वं तृप्ता यात पथिभिर्द्देवयानैः॥ १॥

## अनुव्रजनम्

ॐ आ मा वाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे।
आ मा गन्तां पितरा मातरा चा मा सोमो ऽअमृतत्वेन गम्यात्॥ २॥
ॐ विश्वेदेवाः प्रीयन्ताम्।

यजमान निम्न वाक्य आचार्य सहित ब्राह्मणों से कहे—

**मयाऽऽचरितेऽस्मिन् साङ्कल्पिकनान्दीश्राद्धे न्यूनातिरिक्तो यो विधिः स उपविष्टब्राह्मणानां वचनाच्छ्रीगणपतिप्रसादाच्च परिपूर्णोऽस्तु।**

यजमान द्वारा कहे गये वाक्यों का प्रत्युत्तर आचार्य और ब्राह्मण निम्न वाक्य द्वारा दें—**अस्तु परिपूर्णः।**

**अनेन साङ्कल्पिकनान्दीश्राद्धेन नान्दीमुखाः पितरः प्रीयन्ताम्।**

## आचार्यादिवरणम्

यजमान उत्तराभिमुख आसन पर बैठकर धूमावतीप्रतिष्ठा के निमित्त निम्न सङ्कल्प करके आचार्य का गन्ध, अक्षत, पुष्प द्वारा पूजन करते हुए वरण करें—

**यजमानः दक्षिणहस्ते जलाऽक्षत-द्रव्यं चादाय, सङ्कल्पं कुर्यात्— देशकालौ सङ्कीर्त्य, अमुकगोत्रोत्पन्नोऽहममुकशर्माहम् ( वर्माऽहम्, गुप्तोऽहम्, दासोऽहम् ) अमुकगोत्रोत्पन्नममुकशर्माणं ब्राह्मणमस्मिन् धूमावतीप्रतिष्ठाकर्मणि एभिर्वरणद्रव्यैः आचार्यत्वेन त्वामहं वृणे।**

आचार्य कहें—**वृतोऽस्मि।**

**ॐ व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम्।**
**दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते॥**

निम्न मन्त्र का उच्चारण कर रक्षासूत्र बाँधे—**ॐ यदाबन्धन् दाक्षायणा हिरण्यꣳ शतानीकाय सुमनस्यमानाः। तन्म आबध्नामि शतशारदायायुष्मान्जरदष्टिर्यथासम्॥**

पुनः यजमान अपने हाथों को जोड़कर आगे दिए हुए श्लोक द्वारा आचार्य की प्रार्थना करें—

आचार्यस्तु यथा स्वर्गे शक्रादीनां वृहस्पतिः।
तथा त्वं मम यज्ञेऽस्मिन्नाचार्यो भव सुव्रत!॥

## ब्रह्मावरणम्

**यजमानः—देशकालौ सङ्कीर्त्य, अस्मिन् धूमावतीप्रतिष्ठाकर्मणि एभिर्वरणद्रव्यैरमुकगोत्रममुकशर्माणं ब्राह्मणं ब्रह्मत्वेन त्वामहं वृणे।**

ब्रह्मा का वरण ग्रहण करने वाले ब्राह्मण को निम्न वाक्य कहना चाहिये—**वृतोऽस्मि।**

पुनः इस मन्त्र का उच्चारण करें-**ॐ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः। स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः॥**

यजमान दोनों हाथ जोड़कर निम्न श्लोक द्वारा प्रार्थना करें—

**यथा चतुर्मुखो ब्रह्मा सर्ववेदविशारदः।**
**तथा त्वं मम यज्ञेऽस्मिन् ब्रह्मा भव द्विजोत्तम!॥**

## गाणपत्यवरणम्

**यजमानः—अस्मिन् धूमावतीप्रतिष्ठाकर्मणि एभिर्वरणद्रव्यैरमुकगोत्रममुकशर्माणं ब्राह्मणं गाणपत्यत्वेन त्वामहं वृणे।**

गाणपत्य का वरण ग्रहण करने वाले ब्राह्मण को निम्न वाक्य कहना चाहिये—**वृतोऽस्मि।** पुनः इस मन्त्र का उच्चारण करें-**ॐ गणानां त्वा गणपतिर्ठ० हवामहे प्रियाणां त्वा प्रियपतिर्ठ० हवामहे निधीनां त्वा निधिपतिर्ठ० हवामहे वसो मम। आहमजानि गर्भधमा त्वमजासि गर्भधम्॥**

## उपद्रष्टृवरणम्

**यजमानः—अस्मिन् धूमावतीप्रतिष्ठाकर्मणि एभिर्वरणद्रव्यैरमुकगोत्रममुकशर्माणं ब्राह्मणं उपद्रष्टृत्वेन त्वामहं वृणे।**

उपद्रष्टृ का वरण ग्रहण करने वाले ब्राह्मण को निम्न वाक्य कहना चाहिये—**वृतोऽस्मि**। पुनः इस मन्त्र का उच्चारण करें-**ॐ ऋतये स्तेनहृदयं वैरहत्याय पिशुनं विविक्त्यै क्षत्तारमौपद्रष्ट्यायानुक्षत्तारं बलायानुचरं भूम्ने परिष्कन्दं प्रियाय प्रियवादिनमरिष्ट्या अश्वसादर्ठ० स्वर्गाय लोकाय भागदुघं वर्षिष्ठाय नाकाय परिवेष्टारम्॥**

उपद्रष्टृप्रार्थना

**भगवन् सर्वकर्मज्ञ सर्वधर्मभृतां वर।**
**वितते मम यज्ञेऽस्मिन्नुपद्रष्टा भव द्विज॥**

## ऋत्विक्वरणम्

**यजमानः—अस्मिन् धूमावतीप्रतिष्ठाकर्मणि एभिर्वरणद्रव्यैरमुक-गोत्रममुकशर्माणं ब्राह्मणं ऋत्विक्त्वेन त्वामहं वृणे।**

ऋत्विक् वरण को ग्रहण करनेवाला ब्राह्मण निम्न वाक्य को कहे—**वृतोऽस्मि**। पुनः निम्न मन्त्र का उच्चारण करें—**ॐ ब्राह्मणासः पितरः सोम्यासः शिवे नो द्यावापृथिवी ऽअनेहसा। पूषा नः पातु दुरिताद्दतावृधो रक्षा माकिर्नो ऽअघशर्ठ० स ऽईशत॥**

ऋत्विकप्रार्थना

भगवन् सर्वधर्मज्ञ! सर्वधर्मपरायण!।
वितते मम यज्ञेऽस्मिन् ऋत्विक् त्वं मे मखे भव॥

अथवा

## एकतन्त्रेण वरणसंकल्पः

ॐ विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य श्रीब्रह्मणोऽह्नि द्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे जम्बूद्वीपे भरतखण्डे भारतवर्षे आर्यावर्तैकदेशे, अमुकक्षेत्रे अमुकनद्या अमुकतीरे विक्रमशके बौद्धावतारे अमुकनाम्नि संवत्सरे अमुकायने अमुकऋतौ

महामाङ्गल्यप्रदमासोत्तमे मासे अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते सूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथास्थानस्थितेषु सत्सु एवं गुणगणविशेषणविशिष्टायां शुभपुण्यतिथौ अमुकगोत्रोऽमुकशर्माऽहम् (वर्माऽहम्, गुप्तोऽहम्, दासोऽहम्) अस्मिन् धूमावतीप्रतिष्ठाकर्मणि एभिर्वरणद्रव्यैः नानानामगोत्रान् नानानामधेयान् शर्मणः आचार्यादिब्राह्मणान् युष्मान् वृणे।

## मधुपर्कम्

देशकालौ सङ्कीर्त्य, अमुकगोत्रोऽमुकशर्माहम् (वर्माऽहम्, गुप्तोऽहम्, दासोऽहम्) करिष्यमाण-धूमावतीप्रतिष्ठाकर्मणि वृतान् ऋत्विजो मधुपर्केणार्चयिष्ये।

अपनी शाखा के अनुसार यजमान मधुपर्क कर्म करे। यजमान सभी ब्राह्मणों को पंक्तिबद्ध बैठा दे, उपरान्त ही पारस्कर-गृह्यसूत्र के अनुसार उनका पूजन कर प्रार्थना करे—**ॐ साधु भवन्तस्य आस्यन्तां अर्चयिष्यामो भवतः॥ (ब्राह्मणाः) ॐ अर्चय॥ ऋत्विक्संख्यया विष्टरान्गृहीत्वा (आचार्यः)—ॐ विष्टराः विष्टराः विष्टराः॥ (यजमानः) विष्टराः प्रतिगृह्यन्ताम्। (ब्राह्मणाः) ॐ विष्टराः प्रतिगृह्णीमः॥ ततो कर्ता हस्ताद्विष्टरं गृहीत्वा॥ ॐ वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः। इमं तमभि तिष्ठामि यो मा कश्चाभिदासति॥ इति मन्त्रेण ब्राह्मणाः प्रत्येकं विष्टरं उदगग्रं स्वासनतले स्थापयेयुः॥ ततो यजमानः पाद्यपात्रमादत्ते। (आचार्यः) ॐ पाद्यानि पाद्यानि पाद्यानि। (यजमानः) पाद्यानि प्रतिगृह्यन्ताम्। (ब्राह्मणाः) पाद्यानि प्रतिगृह्णीमः॥ ततो कर्ताहस्तात्पाद्यपात्रमादाय॥ ॐ विराजो दोहोऽसि विराजो दोहमसीय मयि पाद्यायै विराजो दोहः॥ इति मन्त्रेण प्रथमं दक्षिणचरणं तत्पश्चाद्वामचरणं च क्रमेण स्वयं प्रक्षालयेत्॥ ततः पूर्ववद्विष्टरान्गृहीत्वा पूर्ववन्मन्त्रं पठित्वा (ब्राह्मणाः)**

स्वस्वचरणयोरधस्तादुत्तराग्रं दद्युः। (तत आचार्यः) ॐ अर्घाः अर्घाः अर्घाः। (यजमानः) अर्घाः प्रतिगृह्यन्ताम्। (ब्राह्मणाः) अर्घान्प्रतिगृह्णीमः॥ ॐ आपः स्थयुष्माभिः सर्वान् कामानवाप्नवानि॥ इति मन्त्रेण (ब्राह्मणाः) अर्घपात्रं शिरसाभिवन्द्य ॐ समुद्रं वः प्रहिणोमि स्वा न्योनिमभिगच्छत। अरिष्टास्माकं वीरामापराचेति मत्पयः॥ इति मन्त्रं पठन्नैशान्यां दिशि जलं क्षिपेत्॥ ततो यजमानः आचमनीयपात्रमादत्ते। (आचार्यः) ॐ आचमनीयानि आचमनीयानि आचमनीयानि। (यजमानः) आचमनीयानि प्रतिगृह्यन्ताम्॥ (ब्राह्मणाः) आचमनीयानि प्रतिगृह्णीमः॥ ततो कर्ताहस्तादाचमनीयपात्रमादाय—ॐ आमागन्यश-सासर्ठ० सृजवर्चसा। तं मा कुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टिं तनूनाम्॥ इति मन्त्रेण सकृदाचामेत् द्विः तूष्णीम्॥ ततो यजमानः कांस्यपात्रे दधिमधुघृतानि कांस्यपात्रपिहितान्यादत्ते। (आचार्यः) ॐ मधुपर्काः मधुपर्काः मधुपर्काः। (यजमानः) मधुपर्काः प्रतिगृह्यन्ताम्। (ब्राह्मणाः) मधुपर्कान्प्रतिगृह्णीमः॥ कर्तृहस्तस्थमेव तत्पात्रमुद्घाट्य॥ ॐ मित्रस्य त्वा चक्षुषा प्रतीक्ष्ये इति मन्त्रेण वीक्ष्य॥ ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्॥ इति मन्त्रेण गृहीत्वा सव्ये पाणौ निधाय दक्षिणानामिकया—ॐ नमः स्यावास्यायान्नशने यत्तऽआविद्धंतत्ते निष्कृन्तामि॥ इति मन्त्रेण प्रादक्षिण्येन मधुपर्कमालोड्य किञ्चिद्भूमौ क्षिप्त्वा पुनरेवं द्विवारं अनेन मन्त्रेणालोड्य भूमौ निक्षिपेत्। (ततः पात्रं भूमौ निधाय) ॐ यन्मधुनो मधव्यं परमर्ठ० रूपमन्नाद्यम्। तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योन्नादोसानि॥ इति मन्त्रेणानामिकांगुष्ठाभ्यां त्रिः प्राश्य प्रतिप्राशने चैतन्मन्त्र-पाठः॥ शेषमसञ्चरदेशे धारयेत्॥ तत आचम्याङ्गानि स्पृशेत्॥ ॐ वाङ्मऽआस्येऽस्तु॥ इति कराग्रेण मुखालम्भनम्॥ ॐ नसोर्मे प्राणोऽस्तु॥ इति दक्षिणवामनासारन्ध्रद्वये॥ ॐ अक्ष्णोर्मे चक्षुरस्तु इति

दक्षिणवामचक्षुषी॥ ॐ कर्णयोर्मे श्रोत्रमस्तु इति दक्षिणवामकर्णयोः॥ ॐ बाह्वोर्मे बलमस्तु इति दक्षिणवामजान्वोः॥ ॐ ऊर्वोर्मे ओजोस्तु इति युगपदूरू॥ ॐ अरिष्टानि मेऽङ्गानि तनुस्तन्वा मे सह सन्तु इति शिरःप्रभृति सर्वाङ्गाणि उभाभ्यां हस्ताभ्यामालभ्याचामेत्॥ ततो गावः गावः गावः इति यजमानेनोक्ते ( ब्राह्मणाः ) ॐ मातारुद्राणां दुहिता वसूनार्ठ० स्वसादित्यानाममृतस्य नाभिः। प्रनु वोचं चिषितुषे जनाय मागामनागामधितिं वधिष्ट मम चामुष्ययजमानस्योभयोः पाप्मा हतः॥ उत्सृजत्तृणान्यत्तु इत्युच्चैर्ब्रूयात्॥

गोदानसंकल्प—कृतस्य मधुपर्कादिपूजनकर्मणः साङ्गतासिद्ध्यर्थम् इमानि गोनिष्क्रयभूतानि द्रव्याणि नानानामगोत्रेभ्यो ब्राह्मणेभ्यो विभज्य दातुमहमुत्सृजे॥ पुनः सर्वान् प्रार्थयेत्—

## ब्राह्मणप्रार्थना:

अस्य यागस्य निष्पत्तौ भवन्तोऽभ्यर्थिता मया।
सुप्रसन्नैः प्रकर्तव्यं कर्मेदं विधिपूर्वकम्॥ १॥
ब्राह्मणाः सन्तु शास्तारः पापात्पान्तु समाहिताः।
वेदानां चैव दातारः पातारः सर्वदेहिनाम्॥ २॥
जपयज्ञैस्तथा होमैर्दानैश्च विविधैः शुभैः।
देवानां च पितृणां च तृप्त्यर्थं याजकाः स्मृताः॥ ३॥
येषां देहे स्थिता वेदाः पावयन्ति जगत्त्रयम्।
रक्षन्तु सततं ते मां जपयज्ञे व्यवस्थिताः॥ ४॥
अक्रोधनाः शौचपराः सततं ब्रह्मचारिणः।
देवध्यानपरा नित्यं प्रसन्नमनसः सदा॥ ५॥
अदुष्टभाषणा सन्तु मा सन्तु परनिन्दकाः।
ममापि नियमा ह्येते भवन्तु भवतामपि॥ ६॥

## मण्डपप्रवेशः

यजमान अपनी पत्नी, पुत्र, पौत्रादि तथा आचार्य और ब्राह्मणों के साथ मंगलघोष बाजे आदि द्वारा तथा आचार्य सहित सभी ब्राह्मण—'स्वस्तिवाचन' के वैदिक मन्त्रों का उच्चारण करें, घोष से युक्त हो और कलश हाथ में लेकर सुहागिन स्त्रियों को आगे कर गणेश-अम्बा, वरुण कलश, मातृ पीठादियों से युक्त हो महामण्डप की प्रदक्षिणा कर पश्चिमद्वार पर प्राङ्मुख खड़ा होकर निम्न श्लोकों का उच्चारण कर ध्यान करें—

ॐ चतुर्भुजां शुक्लवर्णां कूर्मपृष्ठोपरिस्थिताम्।
शङ्खपद्मधरां चक्रशूलहस्तां धरां भजे॥
आगच्छ देवि कल्याणि वसुधे लोकधारिणी।
पृथिवि ब्रह्मदत्तासि काश्यपेनाभिवन्दिता॥

'**ॐ भूम्यै नमः**' इस वाक्य का उच्चारण करने के उपरान्त यजमान निम्न श्लोक का उच्चारण कर प्रणाम करें—

उद्धृतासि वराहेण कृष्णेन शतबाहुना।
दंष्ट्राग्रैर्लीलया देवि यज्ञार्थं प्रणमाम्यहम्॥

आचार्य निम्न श्लोकों का उच्चारण करते हुए यजमान से अर्घ्य प्रदान करावें—

ब्रह्मणा निर्मिते देवि विष्णुना शङ्करेण च।
पार्वत्या चैव गायत्र्या स्कन्दवै-श्रवणेन च॥
यमेन पूजिते देवि धर्मस्य विजिगीषया।
सौभाग्यं देहि पुत्रांश्च धनं रूपं च पूजिता।
गृहाणार्घमिमं देवि सौभाग्यं च प्रयच्छ मे॥

**ॐ भूम्यै नमः, अर्घं समर्पयामि**। यजमान गन्ध, पुष्प, धूप, दीप और नैवेद्य से भूमि का पूजन करें—

ॐ उपचारानिमां तुभ्यं ददामि परमेश्वरि।
भक्त्या गृहाण देवेशि त्वामहं शरणं गतः॥

आचार्य निम्न श्लोकों का उच्चारण करते हुए यजमान से प्रार्थना करावें—

ॐ नन्दे नन्दस्य वसिष्ठे वसुभिः प्रजया सह।
जय भार्गवदायादे प्रजानां जयमावह॥
पूर्णे गिरिश दायादे पूर्णं कामं कुरुष्व मे।
भद्रे काश्यपदायादे कुरु भद्रां मतिं मम॥
सर्वबीजसमायुक्ते सर्वारत्नौषधीवृते।
रुचिरे नन्दने नन्दे वसिष्ठे रम्यतामिह॥
प्रजापतिसुते देवि चतुरस्त्रे महीयसि।
सुभगे सुव्रते देवि यज्ञे भार्गवि रम्यताम्॥
देशस्वामि पुरस्वामि गृहस्वामि परिग्रहे।
मनुष्यधनहस्त्यश्वपशुवृद्धिकरी भव॥

आचार्य और ऋत्विजों के साथ द्वारपालों से आज्ञा प्राप्त कर पञ्चांग देवताओं के साथ मण्डप के पश्चिमद्वार पर जाकर भूमिपूजन करके तथा सूर्यार्घ्य देकर मण्डप की प्रदक्षिणा कर शंखघोष के साथ यजमान पश्चिमद्वार से और उसकी धर्मपत्नी दक्षिणद्वार से मण्डप में प्रवेश करे। मण्डप में प्रवेश करने के उपरान्त अग्न्यायतन की प्रदक्षिणा कर अग्निकोण में गोधूम गेहूँ के ऊपर कुम्भ का स्थापन करके निम्न मन्त्र का उच्चारण करें—

ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥

आचार्य निम्न वाक्य एवं मन्त्रों का उच्चारण यजमान से करावें—

ॐ देवा आयान्तु यातुधाना अपयान्तु विष्णो देवयजनं रक्षस्व।

आचार्य निम्न दो मन्त्रों का उच्चारण करें—

ॐ इयं वेदिः परोअन्तः पृथिव्याअयं यज्ञो भुवनस्य नाभिः। अयर्ठ० सोमो वृष्णो अश्वस्य रेतो ब्रह्मायं वाचः परमं व्योम॥ १॥ ॐ सुभूः स्वयंभूः प्रथमोन्तर्महत्यर्णवे। दधे हगर्भमृत्वियं यतो जातः प्रजापतिः॥ २॥

यजमान के बायें हाथ में आचार्य पीली सरसों और धान का लावा देकर निम्न मन्त्रों का उच्चारण करें—

ॐ रक्षोहणं वलगहनं वैष्णवीमिदमहं तं वलगमुत्किरामि यं मे निष्ट्यो यममात्यो निचखानेदमहं तं वलगमुत्किरामि यं मे समानो यमसमानो निचखानेदमहं तं वलगमुत्किरामि यं मे सबन्धुर्यमसबन्धुर्निचखानेदमहं तं वलगमुत्किरामि यं मे सजातो यमसजातो निचखानोत्त्कृत्यां किरामि॥ १॥

रक्षोहणो वो वलगहनः प्रोक्षामि वैष्णवान्रक्षोहणो वो वलगहनो-ऽवनयामि वैष्णवान्रक्षोहणो वो वलगहनोऽवस्तृणामि वैष्णवान्रक्षोहणौ वां वलगहना ऽउपदधामि वैष्णवी रक्षोहणौ वां वलगहनौ पर्यूहामि वैष्णवी वैष्णवमसि वैष्णवाः स्थ॥ २॥

रक्षसां भागोऽसि निरस्तर्ठ० रक्ष ऽइदमहर्ठ० रक्षोऽभितिष्ठामीद-महर्ठ० रक्षोऽवबाध इदमहर्ठ० रक्षोऽधमं तमो नयामि। घृतेन द्यावापृथिवी प्रोर्णुवाथां वायो वे स्तोकानामग्निराज्यस्य वेतु स्वाहा स्वाहाकृते ऽऊर्ध्वनभसं मारुतं गच्छतम्॥ ३॥

रक्षोहा विश्वचर्षणिरभि योनिमयोहते। द्रोणे सधस्थमासदत्॥ ४॥

## दिग्रक्षणम्

आचार्य और ब्राह्मण निम्न पौराणिक श्लोकों का उच्चारण करते हुए यजमान से सभी दिशाओं में सरसों को छिड़कवायें—

यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वदा।
स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु॥ १॥

अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः।
ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया॥ २॥

अपक्रामन्तु भूतानि पिशाचाः सर्वतोदिशम्।
सर्वेषामविरोधेन प्रतिष्ठाकर्म समारभे॥ ३॥

भूतप्रेतपिशाचाद्या अपक्रामन्तु राक्षसाः।
स्थानादस्माद् व्रजन्त्वन्यत् स्वीकरोमि भुवम् त्विमाम्॥ ४॥
भूतानि राक्षसा वाऽपि यत्र तिष्ठन्ति केचन।
ते सर्वेऽप्यपगच्छन्तु प्रतिष्ठां च करोम्यहम्॥ ५॥

## पञ्चगव्यकरणम्

आचार्य निम्न मंत्रों का उच्चारण करते हुए पंचगव्य बनावें—

ताम्रपात्रे—ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्॥ इति गोमूत्रम्॥ ॐ मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः। मा नो वीरान् रुद्र भामिनो वधीर्हविष्मन्तः सदमित्वा हवामहे॥ इति गोमयम्॥ ॐ पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयो धाः। पयस्वतीः प्रदिशः सन्तु मह्यम्॥ इति पयः॥ ॐ दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः। सुरभि नो मुखा करत्प्र ण आयूठंषि तारिषत्॥ इति दधि॥ ॐ तेजोसि शुक्रमस्यमृतमसिधामनामासि। प्रियंदेवानामनाधृष्टन्देवयजन्मसि॥ इति आज्यम्॥ ॐ देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्॥ इति कुशोदकम्॥ इति आलोडनं तेनैवाभिमन्त्रणञ्च॥ एवं पञ्चगव्य सम्पाद्य।

## मण्डपप्रोक्षणम्

आचार्य निम्न मंत्रों का उच्चारण करते हुए प्रतिष्ठा मण्डप का प्रोक्षण यजमान से करावें—

ॐ देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्॥ १॥
ॐ आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसे॥ २॥
ॐ यो वः शिवतमोरसस्तस्य भाजयतेह नः। उशतीरिव मातरः॥ ३॥
ॐ तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः॥ ४॥

## मण्डपाङ्गवास्तुपूजनम्

यजमान अपनी धर्मपत्नी के साथ गुरु मण्डप के नैर्ऋत्यकोण में हस्त मात्र की वेदी के समीप आकर अपने आसन पर पूर्वाभिमुख बैठकर आचमन एवं प्राणायाम कर निम्न संकल्प करें—

**देशकालौ सङ्कीर्त्य, अस्मिन् कर्मणि कुण्डमण्डपादिषु हीनाधिकाङ्गतादिवास्तुदोषसूचितसर्वारिष्टनिवर्हणार्थं धूमावतीप्रतिष्ठाङ्गभूतं मण्डपाङ्गवास्तुपूजनं करिष्ये।**

पुनः मन्त्रावृत्त्या आग्नेयादितश्चतुरः शङ्कून् संरोप्य ततः—

**ॐ विशन्तु भूतले नागा लोकपालाश्च सर्वतः।**
**मण्डपेऽत्रावतिष्ठन्तु आयुर्बलकराः सदा॥**

आचार्य निम्न श्लोकों का क्रम से उच्चारण करते हुए यजमान से अपने पार्श्व में माषभक्तिबलि प्रदान करें।

**ॐ अग्निभ्योप्यथ सर्पेभ्यो ये चान्ये तान् समाश्रिताः।**
**बलिं तेभ्यः प्रयच्छामि पुण्यमोदनमुत्तमम्॥ १॥**
**ॐ नैर्ऋत्याधिपतिश्चैव नैर्ऋत्यां तान् समाश्रिताः।**
**बलिं तेभ्यः प्रयच्छामि पुण्यमोदनमुत्तमम्॥ २॥**
**ॐ वायव्याधिपतिश्चैव वायव्यां ये च राक्षसाः।**
**बलिं तेभ्यः प्रयच्छामि पुण्यमोदनमुत्तमम्॥ ३॥**
**ॐ रुद्रेभ्यश्चैव सर्पेभ्यो ये चानन्ये तान् समाश्रिताः।**
**बलिं तेभ्यः प्रयच्छामि पुण्यमोदनमुत्तमम्॥ ४॥**

तदुपरान्त वेदी के ऊपर बिछे हुए वस्त्र पर स्वर्ण की शलाका से पूर्व अग्रभाग वाली दो–दो अंगुल की नौ रेखा का निर्माण आचार्य करके निम्न नाम मन्त्रों से उनका पूजन यजमान से करावें—**१. ॐ लक्ष्म्यै नमः, २. ॐ**

**यशोवत्यै नमः, ३. ॐ कान्तायै नमः, ४. ॐ सुप्रियायै नमः, ५. ॐ विमलायै नमः, ६. ॐ शिवायै नमः, ७. ॐ सुभगायै नमः, ८. ॐ सुमत्यै नमः, ९. ॐ इडायै नमः।**

तत उदगग्राः प्राक्संस्था नवरेखाकार्याः—**१. ॐ धान्यायै नमः, २. ॐ प्राणायै नमः, ३. ॐ विशालायै नमः, ४. ॐ स्थिरायै नमः, ५. ॐ भद्रायै नमः, ६. ॐ जयायै नमः, ७. ॐ निशायै नमः, ८. ॐ विरजायै नमः, ९. ॐ विभवायै नमः।**

'**ॐ रेखादिभ्यो नमः**' इति पंचोपचारैः पूजयेदिति प्रतिष्ठासरणौ विशेषः। मध्य के चार पदों को एक-एक करके उनके कोणों में रेखा देकर वर्णित किये गये रंगों से पद भरें। फिर उनके देवताओं का आवाहन निम्न क्रम से करें।

## वास्तुस्थापनमन्त्राः

आचार्य निम्न मन्त्रों का उच्चारण करते हुए वास्तुदेवता की स्थापना यजमान से करावें—

**ॐ तमीशानं जगतस्तस्थषुस्पतिं धियं जिन्वमवसे हूमहे वयम्। पूषा नो यथा वेदसामसद्वृधेरक्षिता पायुरब्धः स्वस्तये॥ ॐ शिखिने नमः, शिखिनमावाहयामि स्थापयामि।। १॥**

**ॐ शन्नो वातः पवतार्ठ० शं नस्तपतु सूर्यः। शं नः कनिक्रद्देवः पर्जन्यो अभिवर्षतु॥ ॐ पर्जन्याय नमः, पर्जन्यमावाहयामि स्थापयामि॥ २॥**

**ॐ मर्माणि ते वर्मणा छादयामि सोमस्त्वा राजा मृतेनानुवस्ताम्। उरोर्वरीयो वरुणस्ते कृणोतु जयन्तं त्वानु देवा मदन्तु॥ ॐ जयन्ताय नमः, जयन्तमावाहयामि स्थापयामि॥ ३॥**

**ॐ सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान्। जहि शत्रूँर्ठ० २॥ रप मृधो नुदस्वाथाभयं कृणुहि विश्वतो नः॥ ॐ कुलिशायुधाय नमः, कुलशायुधमावाहयामि स्थापयामि॥ ४॥**

ॐ बण्महाँ२ ॥ असि सूर्य बडादित्य महाँ२ ॥ असि। महस्ते सतो महिमा पनस्यतेऽद्धा देव महाँ२॥ असि॥ ॐ सूर्याय नमः, सूर्यमावाहयामि स्थापयामि॥ ५॥

ॐ व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम्। दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते॥ ॐ सत्याय नमः, सत्यमावाहयामि स्थापयामि॥ ६॥

ॐ आ त्वाहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलिः। विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधिभ्रशत्॥ ॐ भृशाय नमः, भृशमावाहयामि स्थापयामि॥ ७॥

ॐ या वां कशा मधुमत्यश्विना सूनृतावती। तया यज्ञं मिमिक्षतम्॥ ॐ आकाशाय नमः, आकाशमावाहयामि स्थापयामि॥ ८॥

ॐ वायो ये ते सहस्रिणो रथासस्तेभिरागहि। नियुत्वान्‌सोमपीतये॥ ॐ वायवे नमः, वायुमावाहयामि स्थापयामि॥ ९॥

ॐ पूषन तव व्रते वयं न रिष्येम कदाचन। स्तोतारस्त इह स्मसि॥ ॐ पूष्णे नमः, पूषणमावाहयामि स्थापयामि॥ १०॥

ॐ तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततठं० संजभार। यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै॥ ॐ वितथाय नमः, वितथमावाहयामि स्थापयामि॥ ११॥

ॐ अक्षन्नमीमदन्त ह्यव प्रिया अधूषत। अस्तोषत स्वभा नवो विप्रा नविष्ठया मती योजान्विन्द्रते हरी॥ ॐ गृहक्षताय नमः, गृहक्षतमावाहयामि स्थापयामि॥ १२॥

ॐ यमाय त्वाङ्गिरस्वते पितृमते स्वाहा। स्वाहा घर्माय स्वाहा घर्मः पित्र॥ ॐ यमाय नमः, यममावाहयामि स्थापयामि॥ १३॥

ॐ गन्धर्वस्त्वा विश्वावसुः परिदधातु विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः। इन्द्रस्य बाहुरसि दक्षिणो विश्वस्यारिष्ट्यै

यजमानस्य परिधिरस्यग्निरिड ईडित:। मित्रावरुणौ त्वोत्तरत: परिधतां ध्रुवेण धर्मणा विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडित:॥ ॐ गन्धर्वाय नम:, गन्धर्वमावाहयामि स्थापयामि॥ १४॥

ॐ सौरी बलाका शार्ग: सृजय: शयाण्डकस्ते मैत्रा: सरस्वत्यै शारि: पुरुषवाक् श्वाविद्भौमी शार्दूलो वृक: पृदाकुस्ते मन्यवे सरस्वते शुक: पुरुषवाक्॥ ॐ भृङ्गराजाय नम:, भृङ्गराजमावाहयामि स्थापयामि॥ १५॥

ॐ मृगो न भीम: कुचरो गिरिष्ठा: परावतआजगथा परस्या:। सृकर्ठ० सर्ठ० शाय पविमिन्द्र तिग्मं वि शत्रून् ताढि वि मृधो नुदस्व॥ ॐ मृगाय नम:, मृगमावाहयामि स्थापयामि॥ १६॥

ॐ उशन्तस्त्वा निधीमह्युशन्त: समिधीमहि। उशन्नुशत आवह पितृन्हविषे अत्तवे॥ ॐ पितृगणेभ्यो नम:, पितृगणान् आवाहयामि स्थापयामि॥ १७॥

ॐ द्वे विरूपे चरत: स्वर्थे अन्यान्या वत्समुपधापयेते। हरिरन्यस्यां भवति स्वधावाञ्छुक्रो अन्यस्यां ददृशे सुवर्चा:॥ ॐ दौवारिकाय नम:, दौवारिकमावाहयामि स्थापयामि॥ १८॥

ॐ नीलग्रीवा: शितिकण्ठा दिवर्ठ० रुद्रा उपश्रिता:। तेषार्ठ० सहस्त्रयोजनेव धन्वानि तन्नमसि॥ ॐ सुग्रीवाय नम:, सुग्रीवमावाहयामि स्थापयामि॥ १९॥

ॐ नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपति-भ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नम:॥ ॐ पुष्पदन्ताय नम:, पुष्पदन्तमावाहयामि स्थापयामि॥ २०॥

ॐ इमं मे वरुण श्रुधी हवमद्या च मृडय। त्वामवस्युराचके ॥ ॐ वरुणाय नम:, वरुणमावाहयामि स्थापयामि॥ २१॥

ॐ यमश्विना नमुचेरासुरादधि सरस्वत्यसुनोदिन्द्रियाय। इमं तर्ठ० शुक्रं मधुमन्तमिन्दुर्ठ० सोमर्ठ० राजानमिह भक्षयामि॥ ॐ असुराय नमः, असुरमावाहयामि स्थापयामि॥ २२॥

ॐ शं नो देवीरभिष्टय आपो भवन्तु पीतये। शं योरभिस्त्रवन्तु नः॥ ॐ शेषाय नमः शेषमावाहयामि स्थापयामि॥ २३॥

ॐ एतत्ते रुद्राऽवसं तेन परो मूजवतोऽतीहि। अवततधन्वा पिनाकावसः कृत्तिवासा अहिर्ठ० सन्नः शिवोतीहि॥ ॐ पापाय नमः, पापमावाहयामि स्थापयामि॥ २४॥

ॐ द्रापे अन्धसस्पते दरिद्रं नीललोहित। आसां प्रजानामेषां पशूनां मा भेर्मा रोङ्मो च नः किञ्चनाममत्॥ ॐ रोगाय नमः, रोगमावाहयामि स्थापयामि॥ २५॥

ॐ अहिरिव भोगैः पर्येति बाहुं ज्याया॥ हेतिं परिबाधमानः। हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमार्ठ० सं परिपातु विश्वतः॥ ॐ अहये नमः, अहयेमावाहयामि स्थापयामि॥ २६॥

ॐ अवतत्य धनुष्ट्वर्ठ० सहस्राक्ष शतेषुधे। निशीर्यशल्यानां मुखा शिवो नः सुमना भव॥ ॐ मुख्याय नमः, मुख्यमावाहयामि स्थापयामि॥ २७॥

ॐ इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः। यथा शमसद्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम्॥ ॐ भल्लाटाय नमः भल्लाटमावाहयामि स्थापयामि॥ २८॥

ॐ सोमो धेनुर्ठ० सोमो अर्वन्तमाशुर्ठ० सोमो वीरं कर्मण्यं ददाति। सादन्यं विदथ्यर्ठ० सभेयं पितृश्रवणं यो ददाशदस्मै॥ ॐ सोमाय नमः, सोममावाहयामि स्थापयामि॥ २९॥

ॐ नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु। ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः॥ ॐ सर्पेभ्यो नमः, सर्पान्मावाहयामि स्थापयामि॥ ३०॥

ॐ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः। विश्वे देवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्॥ ॐ अदित्यै नमः, अदितिमावाहयामि स्थापयामि॥ ३१॥

ॐ इड एह्यदित एहि काम्या एत। मयि वः कामधरणं भूयात्॥ ॐ दित्यै नमः, दितिमावाहयामि स्थापयामि॥ ३२॥

ॐ आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसे॥ ॐ अद्भ्यो नमः, अपः आवाहयामि स्थापयामि ॥ ३३॥

ॐ हस्त आधाय सविता बिभ्रदभ्रिꣳ हिरण्ययीम्। अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरदानुष्टुभेन छन्दसाङ्गिरस्वत्॥ ॐ सावित्राय नमः, सावित्रमावाहयामि स्थापयामि॥ ३४॥

ॐ अषाढं युत्सु पृतनासु पप्रिꣳ स्वर्षामप्सां वृजनस्य गोपाम्। भरेषुजाꣳ सुक्षितिꣳ सुश्रवसं जयन्तं त्वामनुमदेम सोम॥ ॐ जयाय नमः, जयमावाहयामि स्थापयामि॥ ३५॥

ॐ नमस्ते रुद्र मन्यव उतो त इषवे नमः। बाहुभ्यामुत ते नमः॥ ॐ रुद्राय नमः, रुद्रमावाहयामि स्थापयामि॥ ३६॥

ॐ यदद्य सूर उदितेऽनागा मित्रो अर्यमा। सुवाति सविता भगः॥ ॐ अर्यम्णे नमः, अर्यमणमावाहयामि स्थापयामि॥ ३७॥

ॐ विश्वानि देव सवितर्दुरितानि परासुव। यद् भद्रं तन्न आसुव॥ ॐ सवित्रे नमः, सवितारमावाहयामि स्थापयामि॥ ३८॥

ॐ विवस्वन्नादित्यैष ते सोमपीथस्तस्मिनमत्स्व। श्रदस्मै नरो वचसे दधातन यदाशीर्दा दम्पती वाममश्नुतः। पुमान्पुत्रो जायते विन्दते वस्वधा विश्वाहारप एधते गृहे॥ ॐ विवस्वते नमः, विवस्वतमावाहयामि स्थापयामि॥ ३९॥

ॐ सबोधि सूरिर्मघवा वसुपते वसुदावन्। युयोध्यस्मद्द्वेषाꣳसि विश्वकर्मणे स्वाहा॥ ॐ विबुधाधिपाय नमः, विबुधाधिमावाहयामि स्थापयामि॥ ४०॥

ॐ मित्रस्य चर्षणीधृतो वो देवस्य सानसि। द्युम्नं चित्रश्रवस्तमम्॥ ॐ मित्राय नमः, मित्रमावाहयामि स्थापयामि॥ ४१॥

ॐ नाशयित्री बलासस्यार्शस उपचितामसि। अथो शतस्य यक्ष्माणां पाकारोरसि नाशनी॥ ॐ राजयक्ष्मणे नमः, राजयक्ष्मण-मावाहयामि स्थापयामि॥ ४२॥

ॐ स्योना पृथिवी नो भवानृक्षरा निवेशनी। यच्छा नः शर्म सप्रथाः॥ ॐ पृथ्वीधराय नमः, पृथ्वीधरमावाहयामि स्थापयामि॥ ४३॥

ॐ आ ते वत्सो मनो यमत्परमाच्चित्सधस्थात्। अग्ने त्वां कामया गिरा॥ ॐ आपवत्साय नमः, आपवत्समावाहयामि स्थापयामि॥ ४४॥

ॐ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः। स बुध्न्याउपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः॥ ॐ ब्रह्मणे नमः, ब्रह्माणमावाहयामि स्थापयामि॥ ४५॥

ॐ यं ते देवी निर्ऋतिराबबन्ध पाशं ग्रीवास्वविचृत्यम्। तं ते विष्याम्यायुषो न मध्यादथैतं पितुमद्धि प्रसूतः॥ नमो भूत्यै येदं चकार॥ ॐ चरक्यै नमः, चरकीमावाहयामि स्थापयामि॥ ४६॥

ॐ अक्षराजाय कितवं कृतायादिनवदर्शं त्रेतायै कल्पिनं द्वापरायाधि-कल्पिनमास्कन्दाय सभास्थाणुं मृत्यवे गोव्यच्छमन्तकाय गोघातं क्षुधे यो गां विकृन्तन्तं भिक्षमाण उपतिष्ठति दुष्कृताय चरकाचार्यं पाप्मने सैलगम्॥ ॐ विदार्यै नमः, विदारीमावाहयामि स्थापयामि॥ ४७॥

ॐ इन्द्रस्य क्रोडोऽदित्यै पाजस्य दिशां जत्रवोऽदित्यै भसज्जी-मूतान्हृदयौपशेनान्तरिक्षं पुरीतता नभ उदर्येण चक्रवाकौ मतस्नाभ्यां दिवं वृकाभ्यां गिरीन्प्लाशिभिरुपलान्प्लीह्ना वल्मीकान्क्लोमभि-र्ग्लौभिर्गुल्मान्हिराभिः स्रवन्ती ह्रदान्कुक्षिभ्यार्ठ० समुद्रमुदरेण वैश्वानरं भस्मना॥ ॐ पूतनायै नमः, पूतनामावाहयामि स्थापयामि॥ ४८॥

ॐ यस्यास्ते घोरऽ आसन्जुहोम्येषां बन्धानामवसर्जनाय। यां त्वा जनो भूमिरिति प्रमन्दते निर्ऋतिं त्वाहं परिवेद विश्वतः॥ ॐ पापराक्षस्यै नमः, पापराक्षसीमावाहयामि स्थापयामि॥ ४९॥

ॐ यदक्रन्दः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात्। श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महि जातं ते अर्वन्॥ ॐ स्कन्दाय नमः, स्कन्दमावाहयामि स्थापयामि॥ ५०॥

ॐ यदद्य सूर उदितेऽनागा मित्रो अर्यमा। सुवाति सविता भगः॥ ॐ अर्यम्णे नमः, अर्यमणमावाहयामि स्थापयामि॥ ५१॥

ॐ हिङ्काराय स्वाहा हिङ्कृताय स्वाहा क्रन्दते स्वाहाऽवक्रन्दाय स्वाहा प्रोथते स्वाहा प्रप्रोथाय स्वाहा गन्धाय स्वाहा घ्राताय स्वाहा निविष्टाय स्वाहोपविष्टाय स्वाहा संदिताय स्वाहा वल्गते स्वाहासीनाय स्वाहा शयानाय स्वाहा स्वपते स्वाहा जाग्रते स्वाहा कूजते स्वाहा प्रबुद्धाय स्वाहा विजृम्भमाणाय स्वाहा विचृत्ताय स्वाहा सर्ठ० हानाय स्वाहोपस्थिताय स्वाहायनाय स्वाहा प्रायणाय स्वाहा॥ ॐ जृम्भकाय नमः, जृम्भकमावाहयामि स्थापयामि॥ ५२॥

ॐ का स्विदासीत्पूर्वचित्तिः किर्ठ० स्विदासीद् बृहद्वयः। का स्विदासीत्पिलिप्पिला का स्विदासीत्पिशङ्गिला॥ ॐ पिलिपिच्छाय नमः, पिलिपिच्छमावाहयामि स्थापयामि॥ ५३॥

ॐ त्रातारमिन्द्रमवितारमिन्द्रर्ठ० हवे हवे सुहवर्ठ० शूरमिन्द्रम्। ह्वयामि शक्रं पुरुहूतमिन्द्रर्ठ० स्वस्ति नो मघवा धात्विन्द्रः॥ ॐ इन्द्राय नमः, इन्द्रमावाहयामि स्थापयामि॥ ५४॥

ॐ त्वन्नो अग्ने वरुणस्य विद्वान्देवस्य हेडो अवयासिसीष्ठाः। यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषार्ठ०सि प्रमुमुग्ध्यस्मत्॥ ॐ अग्नये नमः, अग्निमावाहयामि स्थापयामि॥ ५५॥

ॐ यमाय त्वाङ्गिरस्वते पितृमते स्वाहा। स्वाहा घर्माय स्वाहा घर्मः पित्रे॥ ॐ यमाय नमः, यममावाहयामि स्थापयामि॥ ५६॥

ॐ असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य। अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु॥ ॐ निर्ऋतये नमः, निर्ऋतिमावाहयामि स्थापयामि॥ ५७॥

ॐ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुशꣳस मा न आयुः प्रमोषीः॥ ॐ वरुणाय नमः, वरुणमावाहयामि स्थापयामि॥ ५८॥

ॐ आ नो नियुद्भिः शतिनीभिरध्वरꣳ सहस्रिणीभिरुपयाहि यज्ञम्। वायोऽ अस्मिन्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः॥ ॐ वायवे नमः, वायुमावाहयामि स्थापयामि॥ ५९॥

ॐ वयꣳसोम व्रते तव मनस्तनूषु बिभ्रतः। प्रजावन्तः सचेमहि॥ ॐ सोमाय नमः, सोममावाहयामि स्थापयामि॥ ६०॥

ॐ तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम्। पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये॥ ॐ ईशानाय नमः, ईशानमावाहयामि स्थापयामि॥ ६१॥

ॐ अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः। यः शꣳसते स्तुवते धायि पज्र इन्द्रज्येष्ठा अस्माँ२॥ अवन्तु देवाः॥ ॐ ब्रह्मणे नमः, ब्रह्माणमावाहयामि स्थापयामि॥ ६२॥

ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनि। यच्छा नः शर्म सप्रथाः॥ ॐ अनन्ताय नमः, अनन्तमावाहयामि स्थापयामि॥ ६३॥

आचार्य निम्न वैदिक मन्त्र और पौराणिक श्लोक का उच्चारण करके प्राणप्रतिष्ठा करावें—ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञꣳ समिमं दधातु। विश्वेदेवास इह मादयन्तामों ३ँप्रतिष्ठ॥

अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च।
अस्यै देवत्वमर्चायै मामहेति च कश्चन॥

## अग्न्युत्तारणम्

ताम्रकलश का पूर्वोक्त स्थापनविधि द्वारा स्थापन और पूजन यजमान से करवाने के उपरान्त उस कलश के ऊपर सुवर्ण की वास्तुप्रतिमा का अग्न्युत्तारण निम्न संकल्प यजमान से करवाकर आचार्य करावें—

**देशकालौ सङ्कीर्त्य, अमुकगोत्रोऽमुकशर्माऽहं ( वर्माऽहम्, गुप्तोऽहम्, दासोऽहम् ) अस्यां वास्तुमूर्तौ अवघातादिदोषपरिहारार्थमग्न्युत्तारणं देवतासान्निध्यार्थं च प्राणप्रतिष्ठा करिष्ये।**

वास्तुदेवता की मूर्ति को किसी शुद्ध पात्र में आचार्य रखकर घृत से उनका अंजन कर उस मूर्ति के ऊपर निरन्तर पंचामृत की धारा निम्न मन्त्रों का उच्चारण करके यजमान से प्रदान करावें—

**ॐ समुद्रस्य त्त्वावकयाग्ने परिव्ययामसि। पावको ऽअस्मब्भ्यर्ठ० शिवो भव॥ १॥ हिमस्य त्त्वा जरायुणाग्ने परिव्ययामसि। पावको ऽअस्मब्भ्यर्ठ० शिवो भव॥ २॥ उप ज्मन्नुप वेतसेऽवतर नदीष्वा। अग्ने पित्तमपामसि मण्डूकि ताभिरागहि। सेमं नो यज्ञं पावकवर्णर्ठ० शिवं कृधि॥ ३॥ अपामिदं न्ययनर्ठ० समुद्रस्य निवेशनम्। अन्याँस्ते ऽअस्मत्त-पन्तु हेतयः पावको अस्मब्भ्यर्ठ० शिवो भव ॥ ४॥ अग्ने पावक रोचिषा मन्द्रया देव जिह्वया। आ देवान्वक्षि यक्षि च ॥ ५॥ स नः पावक दीदिवोऽग्ने देवाँ२॥ इहावह उप यज्ञर्ठ० हविश्च नः॥ ६॥ पावकया यश्चितयन्त्या कृपा क्षामन् रुरुच ऽउषसो न भानुना। तूर्वन्न यामन्नेतशस्य नू रण आ यो घृणे न ततृषाणो ऽअजरः॥ ७॥ नमस्ते हरसे शोचिषे नमस्ते ऽअस्त्वर्चिषे। अन्याँस्ते ऽअस्मत्तपन्तु हेतयः पावको अस्मब्भ्यर्ठ० शिवो भव॥ ८॥ नृषदे वेडप्सुषदे व्वेड् वर्हिषदे वेड्वनसदे वेट् स्वर्विदेवेट्॥ ९॥ ये देवा देवानां यज्ञिया यज्ञियानार्ठ० संवत्सरीणमु पभागमासते। अहुतादो हविषो यज्ञे ऽअस्मिन्त्स्वयं पिबन्तु मधुनो घृतस्य॥ १०॥ ये देवा देवेष्वधि देवत्त्वमायन्ये ब्ब्रह्मणः पुर ऽएतारो**

**ऽअस्य। येब्भ्यो न ऋते पवते धाम किञ्चन न ते दिवो न पृथिव्या ऽअधि स्नुषु॥ ११॥ प्प्राणदा ऽअपानदा व्यानदा वर्चोदा वरिवोदाः। अन्याँस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यर्ठ० शिवो भव॥ १२॥**

आचार्य वास्तुप्रतिमा को यजमान के बाएँ हाथ में रखवाकर उसके दायें हाथ से प्रतिमा का आच्छादन करवावें। तदुपरान्त निम्न प्राणसंचार मन्त्रों का उच्चारण कर प्राणप्रतिष्ठा करावें—**ॐ आँ ह्रीं क्रौं यँ रँ लँ वँ शँ षँ सँ हँ क्षँ हँ सः सोऽहं अस्याः वास्तुमूर्तेः प्राणा इह प्राणाः। ॐ आँ ह्रीं क्रौं यँ रँ लँ वँ शँ षँ सँ हँ क्षँ हँ सः सोऽहं अस्याः वास्तुमूर्तेः जीव इह स्थितः। ॐ आँ ह्रीं क्रौं यँ रँ लँ वँ शँ षँ सँ हँ क्षँ हँ सः सोऽहं अस्याः वास्तुमूर्तेः वाङ्मन-स्त्वक्चक्षुःश्रोत्र-जिह्वाघ्राणपाणिपायूपस्थानि इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा।**

आचार्य प्राणप्रतिष्ठा के लिए—**ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पति-र्यज्ञमिमं तनोत्वरिष्टं यज्ञर्ठ० समिमं दधातु। विश्वेदेवास इह मादयन्तामों३ँप्रतिष्ठ॥** मंत्र और निम्न पौराणिक श्लोक का उच्चारण करें-

**अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च।**
**अस्यै देवत्वमर्चायै मामहेति च कश्चन॥**

वास्तुदेवता की सुवर्ण प्रतिमा को यजमान से कलश के ऊपर स्थापित करवाके आचार्य निम्न क्रमानुसार यजमान से पूजन करावें—

## आवाहनम्

**ॐ वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशो अनमी वो भवा नः। यत्वेमहे प्रति तन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे॥**

**समस्तप्रत्यूहसमुच्चयस्य विनाशकाः श्रीप्रदवास्तुदेवाः।**
**आवाहनं वो वितनोमि भक्त्या शिख्यादिका भव्यकरा भवन्तु॥**
**ॐ वास्तुदेवतायै नमः, वास्तुमावाहयामि स्थापयामि।**

आसनम्

चित्रप्रभाभासुरमच्छशोभं मयार्पितं शोभितमासनं च।
शिख्यादिका भव्यकरा भजन्तु भवन्तु मेऽभीष्टकराः सहाङ्गैः॥
ॐ वास्तुदेवतायै नमः, आसनं समर्पयामि।

पाद्यम्

कस्तुरिकासुरभिचन्दनयुक्तमेलाचम्पालवङ्गघनसारसुवासितं च।
पाद्यं ददामि जगदेकनिवासवास्तुदेवाः सदा सुखकराः प्रतिमानयन्तु॥
ॐ वास्तुदेवतायै नमः, पाद्यं समर्पयामि।

अर्घ्यम्

सौजन्यसौख्यजननीजननीजनानां येषां कृपैव वसुधा वसुधारिणी मे।
ते सर्वदेवगुणपूरितवास्तुदेवा अर्घं सुखेन विमलं मम धारयन्तु॥
ॐ वास्तुदेवतायै नमः, अर्घ्यं समर्पयामि।

आचमनीयम्

कङ्कोलपत्रहरिचन्दनपुष्पयुक्त मेलालवङ्गलवलीघनसारसारम्।
दत्तं सदैव हृदये कुरुणाशयेऽस्मिन् देवा भजन्तु शुभमाचनीयमम्भः॥
ॐ वास्तुदेवतायै नमः, आचमनीयं समर्पयामि।

स्नानम्

ॐ तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम्।
पशूंस्तांश्चक्रे वायव्यानारण्या ग्राम्याश्च ये॥
ॐ वास्तुदेवतायै नमः, स्नानं समर्पयामि।

पञ्चामृतस्नानम्

विमलगाङ्गजलेन युतं पयो घृतसितादधिसर्पिरूपान्वितम्।
प्रियतरं भवतां परिगृह्णत यदि कृपा भवतां मयि सेवके॥
ॐ वास्तुदेवतायै नमः, पञ्चामृतस्नानं समर्पयामि।

शुद्धोदकस्नानम्

जले समादाय विचित्र पुष्पाण्यच्छानि नव्यानि निपातितानि।
स्नानं विधेयं विवुधाः समन्तादागत्य युष्माभिरिहाङ्गणे मे॥
ॐ वास्तुदेवतायै नमः, शुद्धोदकस्नानं समर्पयामि।

वस्त्रम्

अनर्घ्यरत्नैरतिभासितानि चेतोहराण्यद्भूतचिन्तितानि।
शुभानि वस्त्राणि निवेदितानि गृह्णन्तु हार्देन च वास्तुदेवाः॥
ॐ वास्तुदेवतायै नमः, वस्त्रं समर्पयामि।

यज्ञोपवीतम्

कोशेयसूत्रविहितं विमलं सुचारुवेदोक्तरीतिविहितं परिपावनं च।
साङ्गा निवेदितमिदं लघुवास्तुदेवा यज्ञोपवीतमुररीक्रियतां प्रसन्नाः॥
ॐ वास्तुदेवतायै नमः, यज्ञोपवीतं समर्पयामि।

उपवस्त्रम्

त्रिविधतापविनाशविचक्षणाः परमभक्तियुतेन निवेदितम्।
सुरनुता उपवस्त्रमिदं नवं सुरभितं परिगृह्णत मेऽधुना॥
ॐ वास्तुदेवतायै नमः, उपवस्त्रं समर्पयामि।

गन्धम्

शिख्यादयो मलयजातसुगन्धराशिं सप्रेम गृह्णत सुशीतलम्छशोभम्।
सन्तापविस्ततिहरं परमं पवित्रं द्रागर्पितं मम मनोरथपूरकाः स्युः॥
ॐ वास्तुदेवतायै नमः, गन्धं समर्पयामि।

अक्षतान्

शिख्यादयः केसरकुंकुमाक्तान् भक्तया मया स्नेहसमर्पितांश्च।
गृह्णन्तु देवा द्रुतमक्षतान्मे सर्वान्तरायान् विनिवर्तयध्वम्॥
ॐ वास्तुदेवतायै नमः, अक्षतान् समर्पयामि।

पुष्पम्

बहुविधं परितो हि समाहृतं समुचितं मकरन्दसमन्वितम्।
विकसितं कुसुमं विनिवेदितं कुरुत मे सफलं नयनाञ्चनैः॥
ॐ वास्तुदेवतायै नमः, पुष्पं समर्पयामि।

रक्तसूत्रम्

सौभाग्यसौन्दर्यविवर्द्धनानि शोणश्रियाऽऽनन्दविवर्धनानि।
श्रीरक्तचूर्णानि मयाऽर्पितानि शिख्यादयोगृह्णत वास्तुदेवाः॥
ॐ वास्तुदेवतायै नमः, रक्तसूत्रं समर्पयामि।

धूपम्

लवङ्गपाटीरसुगन्धपूर्णं नरासुराणामपि सौख्यदं च।
लोकत्रये गन्धमयं मनोज्ञं गृह्णन्तु धूपं मम वास्तुदेवाः॥
ॐ वास्तुदेवतायै नमः, धूपं माघ्रापयामि।

दीपम्

सद्वर्तिको घोरतमोपहन्ता दीपो मया सत्वरमर्पितो वः।
प्रज्वालितो वह्निशिखासमेतः शिख्यादयो वेदविधानयुक्तः॥
ॐ वास्तुदेवतायै नमः, दीपं दर्शयामि।

नैवेद्यम्

सिद्धान्तकर्पूरविराजमानं सौरभ्यसान्द्रेण सुशोभमानम्।
नैवेद्यमेतस्सरसं पवित्रं स्वीकृत्य मामत्र कृतार्थयन्तु॥
ॐ वास्तुदेवतायै नमः, नैवेद्यं सम०। ( नैवेद्यान्ते आचमनीयजलं सम०

ताम्बूलम् (एला लवंगसहितम्)

शिख्यादिकाः खलु समेत्य गृहं मदीयं भक्त्यार्पितं परमगन्धयुतं सुरम्यम
एलालवङ्गबहुलं क्रमुकादियुक्तं ताम्बूलकं भजत मंडपवास्तुदेवाः
ॐ वास्तुदेवतायै नमः, ताम्बूलं समर्पयामि।

दक्षिणा:

दैवासुरैर्नित्यमशेषकाले प्रगीयगानाः प्रभवः पुराणाः।
गृह्णन्तु सद्यः खलु दक्षिणां मे ध्यानेन भक्ते मयि वर्तितव्यम्॥
ॐ वास्तुदेवतायै नमः, दक्षिणां समर्पयामि।

आर्तिक्यम्

नीराजना सौख्यमयी सदैव गाढान्धकारानपि दूरकर्ती।
अशेषपापैः परिपूरितस्य शुद्धिं करोति प्रियमानवस्य॥
ॐ वास्तुदेवतायै नमः, आर्तिक्यं समर्पयामि।

प्रदक्षिणाम्

प्रदक्षिणाः सन्ति प्रदक्षिणास्तथा पदे-पदे दुखविनाशिका अपि।
जन्मान्तरस्यापि विनाशकारिकाः पापस्य याश्चित्तविवर्धितस्य॥
ॐ वास्तुदेवतायै नमः, प्रदक्षिणां समर्पयामि।

पुष्पाञ्जलिम्

शिख्यादिका मे खलु वास्तुदेवा गृह्णन्तु पुष्पांजलिमव शीघम्।
पीडाहरा भव्यकरा विशाला भवन्तु भूपालनतत्पराश्च॥
ॐ वास्तुदेवतायै नमः, पुष्पाञ्जलिं समर्पयामि।

प्रार्थना

जानामि नोऽर्चनविधिं परमं क्षमध्वं
लोकार्तिपुञ्जमतुलं क्षपयन्तु नित्यम्।
शिख्यादिकाः सुविमलाः सुखमाकिरन्तु
कुर्वन्तु दूरमनिशं दुरितान् समन्तात्॥

## पायसबलिदानम्

आचार्य 'शिखने एष०' से 'अनन्ताय एष०' तक के तिरसठ वाक्यों का उच्चारण करते हुए यजमान से पायसबलि प्रदान करावें—

१. ॐ शिखिने एष पायस बलिर्न मम।
२. ॐ पर्जन्याय एष पायस बलिर्न मम।
३. ॐ जयन्ताय एष पायस बलिर्न मम।
४. ॐ कुलिशायुधाय एष पायस बलिर्न मम।
५. ॐ सूर्याय एष पायस बलिर्न मम।
६. ॐ सत्याय एष पायस बलिर्न मम।
७. ॐ भृशाय एष पायस बलिर्न मम।
८. ॐ आकाशाय एष पायस बलिर्न मम।
९. ॐ वायवे एष पायस बलिर्न मम।
१०. ॐ पूषणे एष पायस बलिर्न मम।
११. ॐ वितथाय एष पायस बलिर्न मम।
१२. ॐ गृहक्षताय एष पायस बलिर्न मम।
१३. ॐ यमाय एष पायस बलिर्न मम।
१४. ॐ गन्धर्वाय एष पायस बलिर्न मम।
१५. ॐ भृङ्गराजाय एष पायस बलिर्न मम।
१६. ॐ मृगाय एष पायस बलिर्न मम।
१७. ॐ पितृभ्यो एष पायस बलिर्न मम।
१८. ॐ दौवारिकाय एष पायस बलिर्न मम।
१९. ॐ सुग्रीवाय एष पायस बलिर्न मम।
२०. ॐ पुष्पदन्ताय एष पायस बलिर्न मम।
२१. ॐ वरुणाय एष पायस बलिर्न मम।
२२. ॐ असुराय एष पायस बलिर्न मम।
२३. ॐ शेषाय एष पायस बलिर्न मम।
२४. ॐ पापाय एष पायस बलिर्न मम।
२५. ॐ रोगाय एष पायस बलिर्न मम।
२६. ॐ अहिर्बुध्न्याय एष पायस बलिर्न मम।
२७. ॐ मुख्याय एष पायस बलिर्नमम।
२८. ॐ भल्लाटाय एष पायस बलिर्न मम।
२९. ॐ सोमाय एष पायस बलिर्न मम।
३०. ॐ सर्पेभ्यो एष पायस बलिर्न मम।
३१. ॐ अदितये एष पायस बलिर्न मम।
३२. ॐ दितये एष पायस बलिर्न मम।
३३. ॐ अद्भ्यो एष पायस बलिर्न मम।
३४. ॐ आपवत्साय एष पायस बलिर्न मम।
३५. ॐ अर्य्यम्णे एष पायस बलिर्न मम।
३६. ॐ सावित्राय एष पायस बलिर्न मम।
३७. ॐ सवित्रे एष पायस बलिर्न मम।
३८. ॐ विवस्वते एष पायस बलिर्न मम।
३९. ॐ विबुधाधिपाय एष पायस बलिर्नमम।
४०. ॐ जयन्ताय एष पायस बलिर्न मम।
४१. ॐ मित्राय एष पायस बलिर्न मम।
४२. ॐ राजयक्ष्मणे एष पायस बलिर्न मम।
४३. ॐ रुद्राय एष पायस बलिर्न मम।
४४. ॐ पृथ्वीधराय एष पायस बलिर्न मम।
४५. ॐ ब्रह्मणे एष पायस बलिर्न मम।
४६. ॐ चरक्यै एष पायस बलिर्न मम।
४७. ॐ विदार्य्यै एष पायस बलिर्न मम।
४८. ॐ पूतनायै एष पायस बलिर्न मम।

४९. ॐ पापराक्षस्यै एष पायस बलिर्न मम।
५०. ॐ स्कन्दाय एष पायस बलिर्न मम।
५१. ॐ अर्य्यम्णे एष पायस बलिर्न मम।
५२. ॐ जृम्भकाय एष पायस बलिर्न मम।
५३. ॐ पिलिपिच्छाय एष पायस बलिर्न मम।
५४. ॐ इन्द्राय एष पायस बलिर्न मम।
५५. ॐ अग्नये एष पायस बलिर्न मम।
५६. ॐ यमाय एष पायस बलिर्न मम।
५७. ॐ निर्ऋतये एष पायस बलिर्न मम।
५८. ॐ वरुणाय एष पायस बलिर्न मम।
५९. ॐ वायवे एष पायस बलिर्न मम।
६०. ॐ सोमाय एष पायस बलिर्न मम।
६१. ॐ ईशानाय एष पायस बलिर्न मम।
६२. ॐ ब्रह्मणे एष पायस बलिर्न मम।
६३. ॐ अनन्ताय एष पायस बलिर्न मम।

आचार्य वास्तुदेवता को निम्न श्लोक का उच्चारण करके यजमान से बलि प्रदान करावें—

नानापक्वान्नसंयुक्तं नानागन्धसमन्वितम्।
बलिं गृहाण देवेश वास्तुदोषप्रणाशक॥
ॐ वास्तुपुरुषाय एष बलिर्न मम।

आचार्य निम्न पौराणिक श्लोक का उच्चारण करके नारिकेल व सुवर्ण वास्तुदेवता की प्रतिमा के ऊपर यजमान से अर्पित करावें—

नमस्ते वास्तुदेवेश सर्वदोषहरो भव।
शान्तिं कुरु सुखं देहि सर्वान्कामान्प्रयच्छ मे॥

आचार्य निम्न श्लोक का उच्चारण करके वास्तुदेवता को यजमान से प्रणाम करवायें—

मन्त्रहीनं क्रियाहीनं भक्तिश्रद्धाविवर्जितम्।
यत्पूजितं मया देव परिपूर्णं तदस्तु मे॥

## रक्षोघ्नसूक्तम्

ॐ कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजे वामवाँ२॥ ऽइभेन। तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः॥ १॥

तव भ्रमासआशुया पतन्त्यनुस्पृश धृषता शोशुचानः। तपूंठ०ष्यग्ने जुह्वा पतङ्गानसन्दितो विसृज विष्वागुल्क्काः॥ २॥

प्रति स्पशो विसृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः। यो नो दूरेअघशर्ठ०सो यो अन्त्यग्ने मा किष्टे व्यथिरादधर्षीत्॥ ३॥

उदग्ने तिष्ठ प्रत्यातनुष्व न्यऽँमित्राओषतात्तिग्महेते। यो नो अरातिर्ठ० समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कम्॥ ४॥

ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने। अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्रमृणीहि शत्रून् अग्नेष्ट्वा तेजसा सादयामि॥ ५॥

## पवमानसूक्तम्

ॐ पुनन्तु मा पितरः सोम्यासः पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः पवित्रेण शतायुषा। पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै ॥ १॥

अग्न आयुर्ठ०षि पवस आसुवोर्जमिषं च नः। आरे बाधस्व दुच्छुनाम्॥ २॥

पुनन्तु मा देवजनाः पुनन्तु मनसा धियः। पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा॥ ३॥

पवित्रेण पुनीहि मा शुक्रेण देव दीद्यत्। अग्ने क्रत्वा क्रतुँ२॥ रनु ॥ ४॥

यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा। ब्रह्म तेन पुनातु मा॥ ५॥

पवमानः सो अद्य नः पवित्रेण विचर्षणिः। यः पोता स पुनातु मा॥ ६॥

उभाभ्यां देव सवितः पवित्रेण सवेन च। मां पुनीहि विश्वतः॥ ७॥

वैश्वदेवी पुनती देव्यागाद्यस्यामिमा बह्वयस्तन्वो वीतपृष्ठाः। तया मदन्तः सधमादेषु वयर्ठ० स्याम पतयो रयीणाम्॥ ८॥

## मण्डपपूजनम्

संकल्पः—देशकालौ संकीर्त्य, अमुकगोत्रोऽमुकशर्माहम् ( वर्माऽहम्, गुप्तोऽहम्, दासोऽहम् ) करिष्यमाण-धूमावतीप्रतिष्ठाङ्गभूतं मण्डपदेवानां स्थापनं पूजनं करिष्ये।

प्रथम-ब्रह्मा—ॐ ब्रह्म यज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः। स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः॥ ॐ ऊद्ध्‍र्व ऽऊषुण ऽऊतये तिष्ठा देवो न सविता। ऊद्ध्‍र्वो व्वाजस्य सनिता यदञ्जिभिर्व्वाघद्भिर्व्विह्वयामहे॥ ॐ आयङ्गौः पृश्निरक्रमीदसदन्मातरं पुरः। पितरञ्च प्रयन्त्स्वः॥ ॐ यतो यतः समीहसे ततो नो ऽअभयं कुरु। शन्नः कुरु प्रजाब्भ्योऽभयं नः पशुब्भ्यः॥

द्वितीय-विष्णु—ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पाठं०सुरे स्वाहा॥ ॐ ऊद्ध्‍र्व ऽऊषु ण०॥ ॐ आयङ्गौः०॥ ॐ यतोयतः०॥

तृतीय-रुद्र—ॐ नमस्ते रुद्र मन्यव उतो त इषवे नमः। बाहुभ्यामुत ते नमः॥ ॐ ऊद्ध्‍र्व ऽऊषु ण०॥ ॐ आयङ्गौः०॥ ॐ यतोयतः०॥

चतुर्थ-इन्द्र—ॐ त्रातारमिन्द्रमवितारमिन्द्रर्ठ० हवे हवे सुहवर्ठ० शूरमिन्द्रम्। ह्वयामि शक्रं पुरुहूतमिन्द्रर्ठ० स्वस्ति नो मघवा धात्विन्द्रः॥ ॐ ऊद्ध्‍र्व ऽऊषु ण०॥ ॐ आयङ्गौः०॥ ॐ यतोयतः०॥

पञ्चम्-सूर्य—ॐ आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च। हिरण्ययेन सविता रथेनादेवो याति भुवनानि पश्यन्॥ ॐ ऊद्ध्‍र्व ऽऊषु ण०॥ ॐ आयङ्गौः०॥ ॐ यतोयतः०॥

षष्ठम्-गणेश—ॐ गणानां त्वा गणपतिर्ठ० हवामहे प्रियाणां त्वा प्रियपतिर्ठ० हवामहे निधीनां त्वा निधिपतिर्ठ० हवामहे वसो मम। आहमजानि गर्भधमा त्वमजासि गर्भधम्॥ ॐ ऊद्ध्‍र्व ऽऊषु ण०॥ ॐ आयङ्गौः०॥ ॐ यतोयतः०॥

सप्तम्-यम—ॐ यमाय त्वा मखाय त्वा सूर्यस्य त्वा तपसे। देवस्त्वा सविता मध्वानक्तु। पृथिव्याः सर्ठ० स्पृशस्पाहि। अर्चिरसि शोचिरसि तपोऽसि॥ ॐ ऊद्ध्वं ऽऊषु ण०॥ ॐ आयङ्गौः०॥ ॐ यतोयतः०॥

अष्टम्-सर्प—नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु। ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः॥ ॐ ऊद्ध्वं ऽऊषु ण०॥ ॐ आयङ्गौः०॥ ॐ यतोयतः०॥

नवम्-स्कन्द—ॐ यदक्रन्दः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात्। श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महि जातं ते अर्वन्॥ ॐ ऊद्ध्वं ऽऊषु ण०॥ ॐ आयङ्गौः०॥ ॐ यतोयतः०॥

दशम-वायु—ॐ वायो ये ते सहस्त्रिणो रथासस्तेभिरागहि। नियुत्वान्सोमपीतये॥ ॐ ऊद्ध्वं ऽऊषु ण०॥ ॐ आयङ्गौः०॥ ॐ यतोयतः०॥

एकादश-चन्द्र—ॐ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्। भवा वाजस्य सङ्गथे॥ ॐ ऊद्ध्वं ऽऊषु ण०॥ ॐ आयङ्गौः०॥ ॐ यतोयतः०॥

द्वादश-वरुण—ॐ इमं मे वरुण श्रुधी हवमद्या च मृडय। त्वामवस्युराचके॥ ॐ ऊद्ध्वं ऽऊषु ण०॥ ॐ आयङ्गौः०॥ ॐ यतोयतः०॥

त्रयोदश-अष्टवसु—ॐ वसुभ्यस्त्वा रुद्रेभ्यस्त्वाऽऽदित्येभ्यस्त्वा सञ्जानाथां द्यावापृथिवी मित्रावरुणौ त्वा वृष्ट्यावताम्। वयन्तु वयोऽक्तर्ठ० रिहाणा मरुतां पृषतीर्गच्छ वशापृश्निर्भूत्वा दिवं गच्छ ततो नो वृष्टिमावह। चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहि॥ ॐ ऊद्ध्वं ऽऊषु ण०॥ ॐ आयङ्गौः०॥ ॐ यतोयतः०॥

चतुर्दश-कुबेर—ॐ सोमो धेनुर्ठ० सोमो अर्वन्तमाशुर्ठ० सोमो वीरं कर्मण्यं ददाति। सादन्यं विदथ्यर्ठ० सभेयं पितृश्रवणं यो ददाशदस्मै॥ ॐ ऊद्ध्व ऽऊषु ण०॥ ॐ आयङ्गौः०॥ ॐ यतोयतः०॥

पञ्चदश-बृहस्पति—ॐ बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु। यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम्॥ ॐ ऊद्ध्व ऽऊषु ण०॥ ॐ आयङ्गौः०॥ ॐ यतोयतः०॥

षोडश-विश्वकर्मा—ॐ विश्वकर्मन् हविषा वर्धनेन त्रातारमिन्द्रम-कृणोरवध्यम्। तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथासत्॥ ॐ ऊद्ध्व ऽऊषु ण०॥ ॐ आयङ्गौः०॥ ॐ यतोयतः०॥

सर्वासु वलिकासु—ॐ नमोऽस्तु सर्पेभ्यो ये के च पृथिवी मनु। ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः॥

प्रार्थना

शेषादिनागराजानः समस्ता मम मण्डपे।
पूजां गृह्णन्तु सततं प्रसीदन्तु ममोपरि॥

ततो भूमिस्पर्शः—ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री। पृथिवीं यच्छ पृथिवीं दृर्ठ० ह पृथिवीं मा हिर्ठ० सीः॥

भूमिभूमिमवगान्माता यथा मातरमप्यगात्।
भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यताम्॥

सपत्नीक यजमान दोनों हाथों में रक्तवर्ण के पुष्पों को लेकर निम्न श्लोक का उच्चारण कर पुष्पाञ्जलि प्रदान करें-

नमस्ते पुण्डरीकाक्ष नमस्ते विश्वभावन।
नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज॥

ॐ नृसिंह उग्ररूप ज्वल ज्वल प्रज्वल प्रज्वल स्वाहा। ॐ नमः शिवाय—इन नामों का यजमान उच्चारण करके पुष्पाञ्जलि को मण्डप की भूमि में छोड़े।

## तोरणपूजनम्

**संकल्पः—देशकालौ सङ्कीर्त्य, अमुकगोत्रोऽमुकशर्माहम् ( वर्माऽहम्, गुप्तोऽहम्, दासोऽहम् ) अस्मिन् धूमावतीप्रतिष्ठाकर्मणि पूर्वादितोरणादि-पूजां करिष्ये।**

आचार्य निम्न श्लोक का उच्चारण करके यजमान से मौलीबन्धन करावें—

**सुदृढं तोरण पूर्वे अश्वत्थं काञ्चनप्रभम्।**
**रक्षार्थं चैव बध्नामि कर्मण्यस्मिन्सुशोभितम्॥**
**ॐ अग्निमीले पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम्॥**
**ॐ भूर्भुवः स्वः ऋग्वेदाधिष्ठिताय सुदृढतोरणाय नमः।**

उपरोक्त मन्त्र और वाक्य का आचार्य उच्चारण करके गन्धादि के द्वारा यजमान से पूजा करवाके महात्रिशूल के शृंगों (नोंक) पर प्रदक्षिणा क्रम से निम्न नाममन्त्रों द्वारा पूजन करावें—

**ॐ इन्द्रराहुभ्यां नमः। ॐ धात्रे नमः। ॐ भगबृहस्पतिभ्यां नमः।**

आचार्य निम्न श्लोक का उच्चारण करके यजमान से प्रार्थना करावें—

**यथा मेरुगिरेः शृङ्गं देवानामालयः सदा।**
**तथा त्वं मम यज्ञेऽस्मिन्देवाधिष्ठानको भव॥**

वहाँ कलशस्थापनविधि से कलश की प्रतिष्ठा करवाके आचार्य कलश के ऊपर निम्न नाममन्त्रों का उच्चारण यजमान से करवाके पूजन करावें—

**ॐ ध्रुवाय नमः। ॐ अध्वराय नमः। ॐ मध्ये-मेधापतये नमः।**

यजमान को दक्षिण की ओर ले जाकर आचमन करवाके निम्न श्लोक का उच्चारण करके आचार्य मौलीबन्धन करावें—

**औदुम्बरं च विकटं याम्ये तोरणमुत्तमम्।**
**रक्षार्थञ्चैव बध्नामि कर्मण्यस्मिन्सुखाय नः॥**

**ॐ इषे त्वोर्ज्जे त्वा वायव स्थ देवो वः सविता प्रार्पयतु श्रेष्ठ तमाय कर्मण आप्यायध्वमघ्न्या इन्द्राय भागं प्रजावतीरनमीवा अयक्ष्मा मा**

वस्तेन ईशत माघशर्ठ० सो ध्रुवा अस्मिन्गोपतौ स्यात बह्विर्यजमानस्य पशून्याहि॥

ॐ भूर्भुवः स्वः सुभद्रतोरणाय नमः, सुभद्रतोरणमावाहयामि स्थापयामि। ॐ भूर्भुवः स्वः विकटतोरणाय नमः, विकटतोरण-मावाहयामि स्थापयामि।

यहाँ भी त्रिशूल के शृंगों (नोंक) पर प्रदक्षिण क्रम से आचार्य निम्न नाममन्त्रों का उच्चारण करके यजमान से पूजन करावें—

ॐ सूर्यपूषाभ्यां, सूर्यपूषाणौ। मध्येमित्राय०। ॐ वरुणाङ्गारकाभ्यां०।

आचार्य निम्न श्लोक का उच्चारण करके यजमान से प्रार्थना करावें—

यथा मेरुगिरेः शृङ्गं देवानामालयः सदा।
तथा त्वं मम यज्ञेऽस्मिन्देवाधिष्ठानको भव॥

वहाँ पर भी पूर्वविधि से कलश स्थापित करवाके कलश के ऊपर निम्न नाममन्त्रों का उच्चारण यजमान से करवाते हुए आचार्य पूजन करावें—

ॐ पर्जन्याय नमः। ॐ अशोकाय नमः। मध्ये—ॐ धरायै नमः।

यजमान को पश्चिम दिशा की ओर ले जाकर आचमन करवाके निम्न श्लोक का उच्चारण करके आचार्य उससे मौलीबन्धन करावें—

प्लाक्षं च पश्चिमे भीमं तोरणं स्वर्णसन्निभं।
रक्षार्थञ्चैव बध्नामि कर्मण्यस्मिन्सुखाय नः॥

ॐ अग्न आयाहि वीतये गृणानो हव्यदातये। निहोता सत्सि बर्हिषि॥

ॐ सुभीमतोरणाय नमः। ॐ सुकर्मतोरणाय नमः।

इस प्रकार से पूजन करवाके वहाँ भी त्रिशूल के शृङ्गों (नोंक) पर प्रदक्षिण क्रम से आचार्य निम्न नाममन्त्रों का उच्चारण करते हुए यजमान से पूजन करावें—ॐ अर्यमशुक्राभ्यां नमः। अर्यमशुक्रौ०। मध्ये—ॐ अंशवे नमः। अंशुम्०। ॐ विवस्वद्बुधाभ्यां नमः। विवस्वद्बुधौ०।

अग्निं दूतं पुरो दधे हव्यवाहमुप ब्रुवे॥ देवाँ२॥ आसादयादिह॥ ॐ मृगाय नमः। मृगमावाहयामि स्थापयामि॥ ४५॥

अदित्यास्त्वा पृष्ठे सादयाम्यन्तरिक्षस्य धत्री विष्टम्भनीं दिशामधि-पत्नीं भुवनानाम्। ऊर्मिर्द्रप्सो अपामसि विश्वकर्मा त ऋषिरश्विनाध्वर्यू सादयतामिह त्वा॥ ॐ यक्षाय नमः। यक्षमावाहयामि स्थापयामि॥ ४६॥

द्यौस्ते पृथिव्यन्तरिक्षं वायुश्छिद्रं पृणातु ते। सूर्यस्ते नक्षत्रैः सह लोकं कृणोतु साधुया॥ ॐ मेघवाहनाय नमः। मेघवाहनमावाहयामि स्थापयामि॥ ४७॥

संबर्हिरङ्क्ताᳪ हविषा घृतेन समादित्यैर्वसुभिः संमरुद्भिः। समिन्द्रो विश्वदेवेभिरङ्क्ता दिव्यं नभो गच्छतु यत्स्वाहा॥ ॐ तीक्ष्णाय नमः। तीक्ष्णमावाहयामि स्थापयामि॥ ४८॥

पवमानः सो अद्य नः पवित्रेण विचर्षणिः। यः पोता स पुनातु मा॥ ॐ अमलाय नमः। अमलमावाहयामि स्थापयामि॥ ४९॥

अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त। इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत्पवन्ते॥ ॐ शुक्राय नमः। शुक्रमावाहयामि स्थापयामि॥ ५०॥

ततः—ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञᳪ समिमं द धातु। विश्वेदेवास इह मादयन्तामों ३ँप्रतिष्ठ॥ इति अजरादि-क्षेत्रपालाः सुप्रतिष्ठिताः वरदाः भवन्तु। ततः षोडशोपचारैः पूजयेत्।

---

# क्षेत्रपालपूजनम्

ध्यानम्

श्रीक्षेत्रपालान्सुरपुष्पमालान्सर्वान्तरायाशु विनाशकालान्।
दत्ताखिलाभीप्सितवर्गजालान्ध्यायेऽधुना चन्दनलिप्तभालान्॥

ॐ साङ्गेभ्यः सपरिवारेभ्यः सशक्तिकेभ्यः सवाहनेभ्यः सायुधेभ्यः क्षेत्रपालेभ्यो नमः, ध्यानं समर्पयामि।

आवाहनम्

समस्तप्रत्यूहसमुच्चयस्य विनाशने प्राप्तगुणाः सुभव्याः।
आवाहनं क्षेत्रसुपालका वः करोम्यहं भव्यकरा भवन्तु॥

ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, आवाहनं समर्पयामि।

आसनम्

चित्रप्रभाभासुरमच्छभक्त्यार्पितं मया साम्प्रतमासनं च।
श्रीक्षेत्रपालाः सुतरां भजन्तु भवन्तु मेऽभीष्टकराः सहाङ्गैः॥

ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, आसनं समर्पयामि।

पाद्यम्

विबुधा निगमप्रसिद्धाः प्रक्षालनाय पदपङ्कजयोरुदारम्।
स्वच्छं सुशीतलमिदं मयकाहृतं च गृह्णन्त्वशेषमिदमिष्टकरं च वारि॥

ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, पाद्यं समर्पयामि।

अर्घ्यम्

सौजन्यसौख्यजननी जननी जनानां येषां कृपैव वसुधा वसुधारिणी वै।
ते सर्वदेवगुरुगौरवधारिदेहा अर्घ्यं मुदा हि च सुरा मम धारयन्तु॥

ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, अर्घ्यं समर्पयामि।

आचमनीयम्

कङ्कोलपत्रहरिचन्दन - पुष्पयुक्तमेलालवङ्गलवलीघनसारसारम्।
दत्तं सदैव हृदये करुणाशयेऽस्मिन्देवा भजन्तु शुभमाचमनीयमम्भः॥

ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, आचमनीयं समर्पयामि।

पञ्चामृतस्नानम्

विमलगाङ्गजलेन युतं पयोघृतसितादधिसर्पिसमन्वितम्।
प्रियतरं भवतां परिगृह्णत यदि कृपाप्रभवो मयि सेवके॥
ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, पञ्चामृतस्नानं समर्पयामि।

शुद्धोदकस्नानम्

जले समादाय विचित्रपुष्पाण्यच्छानि चानीय निपातितानि।
स्नानं विधेयं विबुधाः समन्तादागत्य युष्माभिरिहाङ्गणे मे॥
ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, शुद्धोदकस्नानं समर्पयामि।

वस्त्रम्

अनर्घ्यरत्नैरतिभासितं शुभं सदा प्रियं मङ्गलकारकं वरम्।
स्वच्छं च वस्त्रं विनिवेदितं मया प्रमोददं वै भवतां कृते भवेत्॥
ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, वस्त्रं समर्पयामि।

यज्ञोपवीतम्

कौशेयसूत्रविहितं विमलां सुचारु वेदोक्तरीतिविहितं परिपावनञ्च।
क्षेत्राधिपाः सुमनसः सुनिवेदितं च यज्ञोपवीतमुररीक्रियतां सुदेवाः॥
ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, यज्ञोपवीतं समर्पयामि।

उपवस्त्रम्

विविधता पविनाशविचक्षणाः परमभक्तियुतेन निवेदितम्।
सुरनुता उपवस्त्रमिदं नवं सुरभितं परिगृह्णत मेऽधुना॥
ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, उपवस्त्रं समर्पयामि।

गन्धम्

क्षेत्राधिपा मलयजातसुगन्धराशिं सप्रेम गृह्णत सुशीतलमच्छशोभम्।
सन्तापसन्ततिहरं परमं पवित्रं द्रागर्पितं मम मनोरथपूरकाः स्युः॥
ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, गन्धं समर्पयामि।

अक्षतान्

विमलगाङ्गजलैः परिमार्जितं सुरभिकुङ्कुमरागसुरञ्जितम्।
सततमक्षतमादरचेतसा सकलसौम्यमयं शुभकारकम्॥
ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, अक्षतान् समर्पयामि।

पुष्पम्

बहुविधं परितो हि समाहृतं समुचितं मकरन्दसमन्वितम्।
विकसितं कुसुमं विनिवेदितं कुरुत मे सफलं नयनाञ्जलैः॥
ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, पुष्पं समर्पयामि।

धूपम्

लवङ्गपाटीवरचूर्णवर्द्धितं सर्वासुराणामपि सौख्यकारि।
लोकत्रये गन्धकरं प्रशस्तं क्षेत्राधिपा जिघ्रत धूपगन्धम्॥
ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, धूपमाघ्रापयामि समर्पयामि।

दीपम्

सद्वर्त्तिकां ज्ञानविवर्द्धिकां परां निर्वाण दीपं विनिवेदितं मुदा।
प्रज्वालितं ध्वान्तिविनाशकारकं गृह्णन्तु ज्ञानस्य विशालरूपम्॥
ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, दीपं दर्शयामि।

नैवेद्यम्

सिद्धान्नकर्पूरविराजितं पुरः सौरभ्यसान्द्रेण विवर्धितं तथा।
नैवेद्यमेतद्रुचिरं सुगन्धितं स्वीकृत्य मामत्र कृतार्थयन्तु॥
ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, नैवेद्यं समर्पयामि।
(हस्तप्रक्षालनार्थे, मुखप्रक्षालनार्थे च जलं सम०। पुनराचमनीयं जलं स०।)

ताम्बूलम्

श्रीक्षेत्रपालविबुधाः सदने मदीये भक्त्यार्पितं परमगन्धमयं मनोज्ञम्।
एलालवङ्गलसितं क्रमुकादिकान्तं ताम्बूलमद्य मम गृह्णत हे सुरेन्द्राः॥
ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, मुखवासार्थं ताम्बूलं समर्पयामि।

दक्षिणाम्

**देवासुरैर्नित्यमशेषकाले प्रगीयमानाः प्रभवः पुराणाः।**
**गृह्णन्तु सद्यः खलु दक्षिणां मे ध्यायेन भक्ते लघु वर्तितव्यम्॥**

ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, दक्षिणां समर्पयामि।

नीराजनम्

**नीराजना सौख्यमयी सदैव गाढान्धकारादपि दूरकर्त्री।**
**अशेषपापैः परिपूरितस्य शुद्धिं करोति प्रियमानसत्य॥**

ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, नीराजनं समर्पयामि।

प्रदक्षिणाम्

**प्रदक्षिणाः सन्ति प्रदक्षिणा अपि पदे पदे दुःखविनाशिकास्तथा।**
**जन्मान्तरस्यापि विनाशकारिकाः पापस्य याश्चित्तविवर्धितस्य॥**

ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, प्रदक्षिणां समर्पयामि।

पुष्पाञ्जलिम्

**क्षेत्राधिपाविमलपुष्पवराञ्जलिं मे भक्त्यार्पितं सरसमच्छरसैःप्रपूर्णम्।**
**दीने विधाय करुणां मयि हेसुरेन्द्राः स्वीकृत्य दीनजनवत्सलतां किरन्तु॥**

ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, पुष्पाञ्जलिं समर्पयामि।

स्तुतिम्

**जानामि नोऽर्चनविधिं परमं क्षमध्वं लोकार्तिपुञ्जमतुलं हरतारमेव।**
**क्षेत्राधिपालविबुधाः सुखमाकिरन्तु कुर्वन्तु दूरमनिशं दुरितात्समस्तात्॥**

ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, स्तुतिं समर्पयामि।

---

## कुशकण्डिकाविधिः

अग्नेर्दक्षिणतो ब्रह्मासनम्। अग्नेरुत्तरतः प्रणीतासनद्वयम्। ब्रह्मासने ब्रह्मोपवेशनम्। यावत्कर्म समाप्यते तावत्त्व ब्रह्मा भव 'भवामि' इति। पठित्वा तत्रोपवेशनम्। 'भवामि' इति ब्रह्मणः प्रत्युक्तिः। ब्रह्मा वाग्यतश्च भवेत्। ततः प्रणीतापात्रं सव्यहस्ते धृत्वा दक्षिणहस्तगृहीतेनोदकपात्रेण तत्र जलं सम्पूर्य पश्चादास्तीर्णकुशैषु दक्षिणहस्तेन निधाय (कुशैराच्छाद्य तत्पात्रमालभ्य ब्रह्मणो मुखमवलोक्य ईक्षणमात्रेण ब्रह्मणाऽनुज्ञातः उत्तरत आस्तीर्णेषु कुशेषु निदध्यात्। ततो द्वादशानां परिस्तरण कुशानां चतुरो भागान् वामहस्ते कृत्वा एकैकभागेन आग्नेयादीशानान्तम्, ब्रह्मणोऽग्निपर्यन्तम्, नैर्ऋत्याद्वायव्यान्तं अग्नितः प्रणीतापर्यन्तम्। इतरथा वृत्तिः। तत उत्तरतः स्तीर्णकुशेषु द्विशः पात्राणि यथा सम्भवं न्युब्जानि उदक्संस्थानि प्राक्संस्थानि वा आसादयेत्। पवित्रे छेदन-कुशाः। प्रोक्षणीपात्रम्। आज्यस्थाली। चरुस्थाली। संमार्जनकुशाः

---

अग्निदेव के दक्षिणदिशा की ओर ब्रह्मा के लिए कुशासन रखे। अग्नि के उत्तर दिशा में 'प्रणीता पात्र' के लिये दो आसन रखे। ब्रह्मा के ही आसन पर ब्रह्मा को बैठा दे और कहे—हे ब्रह्मन्! जब तक कर्म की समाप्ति न हो तब तक आप ब्रह्म के पद पर आसीन हो। ब्रह्मा मैं होता हूँ—यो कह कर पूर्व स्थापित आसन पर बैठे, तदनन्तर ब्रह्मा मौन हो जाये, फिर प्रणीता पात्र को बायें हाथ में धारण कर दाहिने हाथ से ग्रहण किये हुए जलपात्र से उस प्रणीता पात्र में जल को भरकर पहले से बिछी हुई कुशाओं पर दाहिने हाथ से रखकर कुशों द्वारा आच्छादन कर उस पात्र को स्पर्श कर ब्रह्मदेव के मुख को देखकर ईक्षण मात्र से ब्रह्मा की आज्ञा लेकर उत्तर दिशा की तरफ बिछी कुशाओं पर रख दे, तदनन्तर बाहर परिस्तरण कुशाओं के चार भागों को बायें हाथ में रखे उसमें से एक-एक भाग से परिस्तरण अग्निकोण से ईशानादि में ही करें। तदनन्तर-पश्चिम दिशा से उत्तर दिशा की ओर बिछी कुशाओं पर दो-दो पात्रों को यथासम्भव न्युब्ज-उदक् संस्थ या प्राक्संस्थ आसादन करे। दो पवित्र छेदन करने के लिए कुशा, प्रोक्षणीपात्र, आज्यस्थाली, चरुस्थाली, संमार्जनकुशा

**पञ्च। उपयमनकुशाः सप्त। समिधस्तिस्त्रः। स्त्रुवः। आज्यम्। तण्डुला। पूर्णपात्रम्। उपकल्पनीयानिद्रव्याणि निधाय तत्तद्ग्रहवस्त्राणि। अधि-देवताद्यर्थं श्वेतानि। तत्तद्ग्रहवर्णाः। तत्तद्ग्रहपुष्पाणि। तत्तद्ग्रहधूपाः तत्तदग्रहनैवेद्यानि। फलानि। दक्षिणाः वितानम्। अर्कादिसमिधः। सयवतिलाः पूर्णाहुत्यर्थं नारिकेलवस्त्रादि। ततः पवित्रकरणम्। आसादितकुशपत्रद्वयं स्थौल्येन समं मध्यशल्यरहितं वामहस्ते कृत्वा अग्रतः प्रादेशमात्रं परिमाय मूले तयोरुपरि कुशत्रयमुदग्रं निधाय तत्कुशत्रयं तयोर्मूलभागेन प्रादक्षिण्येन परिवेष्ट्य तयोः प्रादेश-परिमणामग्रभागं वामस्ते कृत्वा अवशिष्टं मूलभागं कुशत्रयं च दक्षिणहस्ते धृत्वा दक्षिणहस्तेन त्रोटयेत् परित्यजेच्च। शिष्टं पत्रद्वयं पवित्रम्। तस्मिन्पत्रद्वयेऽविश्लेषाय ग्रथिं कुर्यात्। ततः प्रागग्रं प्रोक्षणीपात्रं प्रणीतासन्निधौ निधाय तत्र सपवित्रेण पात्रान्तरेण हस्तेन वा**

---

पाँच, उपयनकुशा सात, तीनसमीधा, स्रुव-घृत-चावल पूर्णपात्र आदि रखें, सूर्यादि ग्रहों के अनेक वर्ण के वस्त्र, अधिदेवता, देवता आदि के लिये सफेद वस्त्र, सूर्यादि ग्रहों के लिए अनेक प्रकार के चन्दन, तत्-तत् वर्ण के ग्रहों की धूप, ग्रहों के नैवेद्य-फल-दक्षिणा वितान सूर्यादि की समिधा यव और तिल, पूर्णाहुत्यर्थ नारिकेल और वस्त्र का आसादन करे। तदन्तर पवित्र बनाये जैसे-स्थापित मध्य (बीच कुशा से रहित) शल्यरहित दो कुशपत्र-द्वय को आगे से बराबर नापकर बायें हाथ में कर कुशा के अग्रभाग से प्रादेश-मात्र नापकर उसके मूल पर उन दोनों कुशा के ऊपर तीन कुशाओं को उद्ग्र रखकर उन कुशाओं को उस दो कुशा के मूल भाग से प्रादक्षिण्यक्रम से वेष्टन कर उन दो कुशपत्रों को प्रादेशमात्र परिमाण के अग्रभाग को बायें हाथ में कर बचे हुए मूल भाग को और तीन कुशाओं को दाहिने हाथ से तोड़ दें फिर उसका त्याग कर दें, शिष्ट पत्रद्वय ही पवित्र है। उस पत्रद्वय में अविश्लेषण के लिए गाँठ दे। तदनन्तर प्रागग्र प्रोक्षणीपात्र को प्रणीता के समीप रख दे

**प्रणीतोदकं त्रिरासिच्य प्रोक्षणीपात्रं सव्ये कृत्वा दक्षिणेन वामहस्तधृतमेव कर्णसमुत्थाय नीचैः कृत्वा प्रणीतोदकेनं पवित्रानोतेनोत्तानहस्तेन प्रोक्षणीः प्रोक्षयेत्। ततः प्रोक्षणीजलेन आज्यस्थालीं प्रोक्षणम्। चरुस्थालीं प्रोक्षणम्। समार्जनकुशानां प्रोक्षणम्। उपयमनकुशानां प्रोक्षणम्। समिधां प्रोक्षणम्। स्रुवस्य प्रोक्षणम्। आज्यस्य प्रोक्षणम्। पूर्णपात्रस्य प्रोक्षणम्। ततस्ते पवित्रे प्रोक्षणीपात्रे संस्थाप्य प्रोक्षणीपात्रमग्निप्रणतयोर्मध्ये निदध्यात्। ततोऽग्नेः पश्चादाज्यस्थालीं निधाय तत्राज्यं प्रक्षिपेत्। एवं चरुस्थालीमग्नेः पश्चिमतो निधाय तत्र सपवित्रायां त्रिः प्रक्षालितान् तण्डुलान् प्रक्षिप्य प्रणीतोदकमासिच्योपयुक्तं जलं तत्र निनीय ब्रह्मदक्षिणत आज्यं आचार्य उत्तरतश्चरुमदग्धमस्त्रावितमण्डमन्तरूष्मपक्वं सुशृतं पचेत्। (केवलाज्ये तु उत्तराश्रितामाज्य स्थालीमग्नावारोपयेत्।) ततोऽग्नेर्ज्वलदुल्मुकमादाय ईशानादिप्रदक्षिणमीशान पर्यन्तमग्निमाज्यचर्वोः परितं भ्रामयित्वोल्मुकमग्नौ**

---

वहाँ से सपवित्र पात्रान्तर हाथ से प्रणीता पात्र से जल को तीन बार आसेचन कर प्रोक्षणी पात्र को बायें हाथ में कर दाहिने से बायें हाथ से धारण किये हुए ही कान की तरफ उठाकर नीचे की तरफ कर प्रणीतापात्र के जल से पवित्र द्वारा ग्रहण किये हुए, उत्तानहाथ से प्रोक्षणीपात्र का प्रोक्षण करें। प्रोक्षणी जल से आज्य-स्थाली का प्रोक्षण करे। चरुस्थाली का प्रोक्षण करे। संमार्जन कुशाओं का प्रोक्षण करे। उपयमन कुशाओं का, समिधा का, स्रुवका आज्यका और पूर्णपात्रका प्रोक्षण करे। तदन्तर उन दोनों पवित्रों को प्रोक्षणी पात्र में स्थापन कर उस प्रोक्षणी पात्र को अग्नि और प्रणीतापात्र के मध्य में रख दे। फिर अग्नि के पीछे आज्यस्थाली रख उसमें आज्य का प्रक्षेप करे। इसी प्रकार अग्नि के पश्चिम में चरुस्थाली रख सपवित्र वाली उसमें तीन बार धोये हुए चावलों को छोड़ प्रणीता पात्र के जल से आसेचन कर उपयुक्त जल को उसमें छोड़कर ब्रह्मा के दक्षिण तरफ घी को आचार्य उत्तरदिशा से अदग्ध अश्रावित पक्वचरु को पका दे। तदन्तर अग्निकुंड या स्थण्डिल से जलते हुए, उल्मुक को लेकर ईशान कोण आदि से प्रदक्षिण कर ईशानकोण पर्यन्त

प्रक्षिप्य अप्रदक्षिणं हस्तमीशानकोणपर्यन्तं पर्यावर्तयेत्। अर्द्धश्रिते चरौ स्रुवं गृहीत्वाऽधोबिलं सकृत् प्रतप्य संमार्जनकुशानामग्रैरन्तरतः उपरि मूलादारभ्याग्रपर्यन्तं प्राञ्चं संमृज्य कुशमूलैर्बहिरधः प्रदेशे अग्रादारभ्य प्रत्यञ्चं समृज्य संमार्जन कुशानग्नौ प्रक्षिप्य प्रणीतोदकेन स्रुवमभ्युक्ष्य पुनःस्रुवं प्रयप्य दक्षिणस्यां दिशि तं तस्थापयेत्। तत् शृतं चरुं स्रुवेण गृहीतेनाज्येनाभिघार्य आज्यस्थालीं चरोः पूर्वेणानीयोत्तरत उद्वास्याग्रेः पश्चिमतः स्थापयेत्। ततश्चरुमादाय उत्तरत उद्वास्य आज्यस्य पूर्वेणानीय आज्यस्योत्तरतः स्थापयेत्। ततो दक्षिणहस्तस्याङ्गुष्ठा-नामिकाभ्यां पवित्रयोर्मूलं सङ्गृह्य वामहस्तस्याङ्गुष्ठानामिकाभ्यां पवित्रयोर्मूलं संङ्गृह्य वामहस्तस्याङ्गुष्ठा नामिकाभ्यां तयोरग्रं संङ्गृह्य ऊर्ध्वाग्रेऽनम्रीकृत्य धारयन्नेवाज्ये प्रक्षिप्याज्यस्यात्पवनं कुर्यादुच्छालयेत्। तत आज्यमवेक्ष्य सत्यपद्रव्ये तन्निरस्येत्।

---

अग्नि स्थित आज्य और चरु के चारों ओर घुमकर उस उल्मुक को अग्नि में छोड़ दे। फिर अप्रदक्षिण क्रम से अपने हाथ को ईशान कोण पर्यन्त घुमा दे। चरु के आधे पक जाने पर स्रुव को हाथ में ग्रहण कर उस स्रुव के बिल को नीचे की ओर कर एक बार अग्नि में तपाकर समार्जन कुशाओं के अग्रभाग से भीतर की ओर से मूल भाग से आरम्भ कर अग्रभाग पर्यन्त पूर्व की तरफ संमार्जन कर कुश मूलों से बाहर और नीचे के हिस्से में अग्रभाग से आरम्भ कर शुद्ध कर सर्माजन कुशाओं को अग्नि में फेककर प्रणीत जल से स्रुव का अभ्युक्षण तथा स्रुव का प्रतपन कर दक्षिण दिशा की ओर उस स्रुव को रख दे। तदनन्तर पके हुए चरु में स्रुव के द्वारा घी को छोड़ आज्यस्थाली को चरु के पूर्व से लेकर उत्तरदिशा की ओर रख फिर अग्नि के पश्चिम दिशा की तरफ स्थापन करे। फिर चरु को लेकर उत्तर दिशा से उतारे हुए घृत के पूर्व से ले आकर घृत के उत्तर की ओर स्थापना करे। तदनन्तर-दाहिने हाथ के अंगूठे और अनामिका से उस दोनों कुशाओं (पवित्र) के अग्रभाग को पकड़कर ऊपर के अग्रभाग को नम्र बनाकर धारण करते हुए ही घृत में प्रक्षेप कर आज्य को उत्पवन करे। फिर घृत को देख कर उसमें जो अपद्रव्य हो उसे निकाल दे।

ततः पूर्ववत् पवित्रे गृहीत्वाप्रोक्षणीनामपामुत्पवनं कुर्यात्। ततो वामहस्ते उपयमनमादाय दक्षिणेन प्रादेशमात्रीः पालाशीस्तिस्त्रः समिधो घृताक्ता द्व्यङ्गुलादूर्ध्वं मध्यमानामिकांगुष्ठैर्मूलभागे धृतास्तर्जन्यग्रवत्स्थूलास्तन्त्रेणाग्नौतूष्णीं प्रक्षिप्य सपवित्रेण प्रोक्षण्युदकेन चुलुकगृहीतेन ईशानादि—प्रदक्षिणमीशानकोणपर्यन्तं पर्युक्ष्य अप्रदक्षिणमीशानकोणपर्यन्तं हस्तं पर्यावर्तयेत्। ततः पवित्रे प्रणीतासु निधाय दक्षिणं जान्वाच्य ब्रह्मणा कुशैरन्वारब्ध उपयमनकुशसहितं प्रसारिताङ्गुलि हस्तं हृदि निधाय दक्षिणहस्तेन मूले चतुरङ्गुल त्यक्त्वा शङ्खसन्निभमुद्रया स्त्रुवं गृहीत्वा समिद्धतमेऽग्नौ वायव्य कोणादारभ्याग्निकोणपर्यन्तं प्राञ्चं वा सन्तघृतधारया मनसा प्रजापतिं ध्यायन् स्त्रुवेण तुष्णीं सशेषं मौनी जुहुयात्। नात्र स्वाहाकारः। इदं प्रजापतये न मम इति यजमानेन त्यागः कर्तव्यः। होमत्यागानन्तरं स्त्रुवावशिष्टस्याज्यस्य सर्वत्र प्रोक्षणीपात्रे प्रक्षेपः कार्यः।

---

तदनन्तर फिर पवित्रों को ग्रहण कर प्रोक्षणी स्थित जल का उत्पवन करे फिर बायें हाँथ में उपयमन कुशा को लेकर दाहिने हाथ में प्रादेश प्रमाण की तीन समिधाओं को घी में भिगोकर दो अंगुल ऊपर मध्यमा अनामिका अँगूठे के मूलभाग में धारण की हुई, तर्जनी की तरह मोटी समिधा को एक साथ चुपचाप अग्नि में प्रक्षेप कर सपवित्र वाली प्रोक्षणी पात्र के जल से चुल्लु द्वारा ग्रहण कर ईशान कोण से प्रक्षेप कर फिर ईशान पर्यन्त प्रदक्षिण क्रम से पर्युक्षण कर अप्रदक्षिण क्रम से ईशान कोण पर्यन्त अपने दाहिने हाथ को केवल घुमा दे। तदनन्तर उन पवित्र को प्रणीता पात्र में रख अपने दाहिने जानु को मोड़कर ब्रह्मा से कुशों द्वार अन्वारब्ध (स्पर्श) कर उपयमन कुशा के सहित अपने हाथ की अँगुलियों को फैलाकर उस हाथ को हृदय में लगा दाहिने हाथ से स्त्रुव के मूल से चार अंगुल छोड़कर शंखमुद्रा से स्त्रुव को ग्रहण कर प्रदीप्त अग्नि में वायव्यकोण से प्रारम्भ कर अग्निकोण पर्यन्त या पूर्व दिशा की ओर निरन्तर घृत की धारा द्वारा प्रजापति का मन से ध्यान कर स्त्रुव से चुपचाप शेष के सहित हवन करे, इसमें स्वाहाकार नहीं है। 'इदं प्रजापतये न मम' इस वाक्य का यजमान त्याग करे। होम त्याग के बाद स्त्रुव स्थित आज्य का सर्वत प्रोक्षणी पात्र में प्रक्षेप करे।

ततो निर्ऋतिकोणादारभ्येशानकोणपर्यन्तं प्राञ्चं वा—ॐ इन्द्राय स्वाहा इति जुहुयात्। 'इदमिन्द्राय न मम' इति त्यजेत्। तत उत्तरपूर्वार्द्धे-ॐ अग्नये स्वाहा इदमग्नये न मम इति हुत्वा दक्षिण-पूर्वार्द्धे-ॐ सोमाय स्वाहा-इदं सोमाय न मम इति जुहुयात्।

संकल्प—अस्मिन् सप्रासादधूमावतीप्रतिष्ठाकर्मणि इमानि उपकल्पितानि हवनीयद्रव्याणि या या यक्ष्यमाणदेवतास्ताभ्यस्ताभ्यो मया परित्यक्तानि न मम। यथा दैवतानि सन्तु॥

## वराहुतिः

आचार्यः—ॐ गणानां त्वा गणपतिर्ठ० हवामहे प्रियाणां त्वा प्रियपतिर्ठ० हवामहे निधीनां त्वा निधीपतिर्ठ० हवामहे वसो मम। आहमजानि गर्भधमात्वमजासि गर्भधम् स्वाहा॥

ॐ अम्बेऽअम्बिकेऽम्बालिके न मा नयति कश्चन। ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् स्वाहा॥

---

तदनन्तर-निर्ऋतिकोण से आरम्भ कर ईशान कोण पर्यन्त या पूर्व की तरफ 'इन्द्राय स्वाहा' इससे हवन करे। इद्रमिन्द्राय न मम, इससे त्याग करे फिर उत्तर पूर्वार्ध में 'अग्नये स्वाहा' से हवन करें। दक्षिण पूर्वार्ध में 'सोमाय स्वाहा' से हवन करे।

**संकल्प**—पुनः यजमान दाहिने हाथ में जल लेकर 'अस्मिन् सप्रासाद-धूमावतीप्रतिष्ठाकर्मणि' से 'परित्यक्तानि न मम' तक का उच्चारण करके जल को भूमि में छोड़ दें, फिर 'यथा दैवतानि सन्तु' इस वाक्य का भी उच्चारण करे।

**वराहुति**—आचार्य 'ॐ गणानां त्वा०' से गणेश और 'ॐ अम्बे-ऽअम्बिके०' से अम्बा के लिए एक-एक घृताहुति हवनकुण्ड में यजमान से प्रदान करावें।

## ग्रहादिहवनम्

आचार्य 'ॐ आ कृष्णेन०' से 'ॐ स्योना पृथिवि०' पर्यन्त एक-एक मन्त्र का उच्चारण करते हुए यजमान से हवनकुण्ड में हवन करावें—

ॐ आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च। हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् स्वाहा॥ १॥

इमं देवाऽअसपत्नर्ठ० सुवद्ध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय। इममपुष्य पुत्रममुष्यै पुत्रमस्यै विशऽएष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानार्ठ० राजा स्वाहा॥ २॥

अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपार्ठ० रेतार्ठ०सि जिन्वति स्वाहा॥ ३॥

उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्तेसर्ठ० सृजेथामयं च। अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन् विश्वेदेवा कर्ताश्च सीदत स्वाहा॥ ४॥

बृहस्पते अति यदर्यो अर्हाद्युमद्विभातिक्रतुमज्जनेषु। यद्दीद-यच्छवस ऽऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् स्वाहा॥ ५॥

अन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिबत्क्षत्रं पयः सोमं प्रजापतिः। ऋतेन सत्त्यमिन्द्रियं विपानर्ठ० शुक्रमन्धस ऽइन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु स्वाहा॥ ६॥

शं नो देवीरभिष्ट्य आपो भवन्तु पीतये शंयोरभिस्रवन्तु नः स्वाहा॥ ७॥

कयानश्चित्रऽआभुवदूती सदावृधः सखा। कया शचिष्ठया वृता स्वाहा॥ ८॥

केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे समुषद्भिरजायथाः स्वाहा॥ ९॥

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मा ऽमृतात् स्वाहा॥ १०॥

श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुं म ऽइषाण सर्वलोकं म इषाण स्वाहा॥ ११॥

यदक्रन्दः प्रथमं जायमान ऽद्यन्त्समुद्रादुत वा पुरीषात्। श्ये नस्य पक्षा हरिणस्य बाहू उपस्तुयं महि जातं ते ऽअर्वन् स्वाहा॥ १२॥

विष्णोर राटमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोऽसि वैष्णवमसि विष्णवे त्वा स्वाहा॥ १३॥

आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णु रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् स्वाहा॥ १४॥

सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान्। जहि शत्रूंर्ठ०२॥ रप मृधो नुदस्वाथाभयं कृणुहि विश्वतो नः स्वाहा॥ १५॥

यमाय त्वाङ्गिरस्वते पितृमते स्वाहा। स्वाहा घर्माय स्वाहा घर्मः पित्रे स्वाहा॥ १६॥

कार्षिरसि समुद्रस्य त्वाक्षित्या उन्नयामि। समापो अद्भिरग्मत समोषधीभिरोषधीः स्वाहा॥ १७॥

चित्रावसो स्वस्ति ते पारमशीय स्वाहा॥ १८॥

अग्निं दूतं पुरो दधे हव्यवाहमुप ब्रुवे। देवाँ२॥ आसादयादिह स्वाहा॥ १९॥

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन। महेरणाय चक्षसे स्वाहा॥ २०॥

स्योना पृथिवी नो भवानृक्षरा निवेशनी। यच्छा नः शर्म सप्रथाः स्वाहा॥ २१॥

तद्विष्णोः परमं पदर्ठ० सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम् स्वाहा॥ २२॥

इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः। देवसेना-नामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम् स्वाहा॥ २३॥

अदित्यै रास्नासीन्द्राण्या उष्णीषः। पूषासि घर्माय दीष्व स्वाहा॥ २४॥

प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्त्वयममुष्य पितासावस्य पिता वयर्ठ० स्याम पतयो रयीणाम् स्वाहा॥ २५॥

नमोऽस्तु सर्पेभ्यो ये के च पृथिवी मनु। ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः स्वाहा॥ २६॥

ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः। स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः स्वाहा॥ २७॥

गणानां त्वा गणपतिर्ठ० हवामहे प्रियाणां त्वा प्रियपतिर्ठ० हवामहे निधीनां त्वा निधिपतिर्ठ० हवामहे वसो मम। आहमजानि गर्भधमा त्वमजासि गर्भधम् स्वाहा॥ २८॥

अम्बे अम्बिकेऽम्बालिके न मा नयति कश्चन। ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् स्वाहा॥ २९॥

वायो ये ते सहस्त्रिणो रथासस्तेभिरागहि। नियुत्वान् सोमपीतये स्वाहा॥ ३०॥

घृतं घृतपावनः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा। दिशः प्रदिश आदिशो विदिश उद्दिशो दिग्भ्यः स्वाहा॥ ३१॥

या वां कशा मधुमत्यश्विना सूनृतावती। तया यज्ञं मिमिक्षतम् स्वाहा॥ ३२॥

वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशो ऽअनमीवा भवो नः। यत्वेमहे प्रति तन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे स्वाहा॥ ३३॥

नहि स्पशमविदन्नन्यमस्माद्वैश्वानरात्पुरएतारमग्नेः। एमेनमवृधन्न-मृता अमर्त्यं वैश्वानर क्षैत्रजित्याय देवाः स्वाहा॥ ३४॥

त्रातारमिन्द्रमवितारमिन्द्रर्ठ० हवे हवे सुहवर्ठ० शूरमिन्द्रम्। ह्वयामि शक्रं पुरुहूतमिन्द्रर्ठ० स्वस्ति नो मघवा धात्विन्द्रः स्वाहा॥ ३५॥

त्वं नो अग्ने तव देव पायुभिर्मघोनो रक्ष तन्वश्च वन्द्य। त्राता तोकस्य तनये गवामस्य निमेषर्ठ० रक्षमाणस्तव व्रते स्वाहा॥ ३६॥

यमाय त्वाङ्गिरस्वते पितृमते स्वाहा। स्वाहा घर्माय स्वाहा घर्मः पित्रे स्वाहा॥ ३७॥

असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य। अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु स्वाहा॥ ३८॥

तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुशर्ठ०स मा न आयुः प्रमोषीः स्वाहा॥ ३९॥

आ नो नियुद्भिः शतिनीभिरध्वर्ठ० सहस्त्रिणीभिरुपयाहि यज्ञम्। वायो अस्मिन्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः स्वाहा॥ ४०॥

वयर्ठ० सोम व्रते तव मनस्तनूषु बिभ्रत। प्रजावन्तः सचेमाहि स्वाहा॥ ४१॥

तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम्। पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये स्वाहा॥ ४२॥

अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः। यः शर्ठ०सते स्तुवते धायि पज्र इन्द्रज्येष्ठा अस्माँ२॥ अवन्तु देवाः स्वाहा॥ ४३॥

स्योना पृथिवि नो भवानृक्षरा निवेशनि। यच्छा नः शर्म स प्रथाः स्वाहा॥ ४४॥

अथवा

## केवलं नामाऽनुक्रमेण ग्रहादिहवनम्

ॐ सूर्याय स्वाहा, सोमाय स्वाहा, भौमाय स्वाहा, बुधाय स्वाहा, बृहस्पतये स्वाहा, शुक्राय स्वाहा, शनैश्चराय स्वाहा, राहवे स्वाहा, केतवे स्वाहा, ईश्वराय स्वाहा, उमायै स्वाहा, स्कन्दाय स्वाहा, विष्णवे

**स्वाहा, ब्रह्मणे स्वाहा, इन्द्राय स्वाहा, यमाय स्वाहा, कालाय स्वाहा, चित्रगुप्ताय स्वाहा, अग्नये स्वाहा, अद्भ्यो स्वाहा, पृथिव्यै स्वाहा, विष्णवे स्वाहा, इन्द्राय स्वाहा, इन्द्राण्यै स्वाहा, प्रजापतये स्वाहा, सर्पेभ्यो स्वाहा, ब्रह्मणे स्वाहा, गणपतये स्वाहा, दुर्गायै स्वाहा, वायवे स्वाहा, आकाशाय स्वाहा, अश्विनौ स्वाहा, वास्तोष्पतये स्वाहा, क्षेत्राधिपतये स्वाहा, इन्द्राय स्वाहा, अग्नये स्वाहा, यमाय स्वाहा, निर्ऋतये स्वाहा, वरुणाय स्वाहा, वायवे स्वाहा, सोमाय स्वाहा, ईशानाय स्वाहा, ब्रह्मणे स्वाहा, अनन्ताय स्वाहा।**

आचार्य गणपति-गौरी-वरुण गणेश के साथ षोडशमातृका, वसोर्धारा का, वास्तुपीठदेवता, सर्वतोभद्रदेवता, चतुःषष्टियोगिनी, क्षेत्रपालादि देवताओं के लिए यजमान से एक-एक आहुति घृत के द्वारा प्रदान करावें। पुनः तिल और घृत से १०, ११८ अथवा ८ आहुतियाँ कुण्ड में यजमान से प्रदान करावें।

**तद्यथा—ॐ गणपतये स्वाहा। ॐ अम्बिकायै स्वाहा। ॐ वरुणाय स्वाहा। ॐ गणपतये स्वाहा। ॐ गौर्यै स्वाहा। ॐ पद्मायै स्वाहा। ॐ शच्यै स्वाहा। ॐ मेधायै स्वाहा। ॐ सावित्र्यै स्वाहा। ॐ विजयायै स्वाहा। ॐ जयायै स्वाहा। ॐ देवसेनायै स्वाहा। ॐ स्वधायै स्वाहा। ॐ स्वाहायै स्वाहा। ॐ मातृभ्यः स्वाहा। ॐ लोकमातृभ्यः स्वाहा। ॐ धृत्यै स्वाहा। ॐ पुष्ट्यै स्वाहा। ॐ तुष्ट्यै स्वाहा। ॐ आत्मनः कुलदेवतायै स्वाहा। ॐ श्रियै स्वाहा। ॐ लक्ष्म्यै स्वाहा। ॐ धृत्यै स्वाहा। ॐ मेधायै स्वाहा। ॐ स्वाहायै स्वाहा। ॐ प्रज्ञायै स्वाहा। ॐ सरस्वत्यै स्वाहा।**

## केवलं नामाऽनुक्रमेण वास्तुमण्डलहोमः

आचार्य शिख्यादि देवताओं के निम्न नाममन्त्रों का उच्चारण करते हुए कुण्ड में यजमान से होम करावें—

**ॐ शिखिने स्वाहा। ॐ पर्जन्याय स्वाहा। ॐ जयन्ताय स्वाहा। ॐ कुलिशायुधाय स्वाहा। ॐ सूर्याय स्वाहा। ॐ सत्याय स्वाहा।**

ॐ भृशाय स्वाहा। ॐ आकाशाय स्वाहा। ॐ वायवे स्वाहा। ॐ पूष्णे स्वाहा। ॐ वितथाय स्वाहा। ॐ गृहक्षताय स्वाहा। ॐ यमाय स्वाहा। ॐ गन्धर्वाय स्वाहा। ॐ भृङ्गराजाय स्वाहा। ॐ मृगाय स्वाहा। ॐ पितृभ्यः स्वाहा। ॐ दौवारिकाय स्वाहा। ॐ सुग्रीवाय स्वाहा। ॐ पुष्पदन्ताय स्वाहा। ॐ वरुणाय स्वाहा। ॐ असुराय स्वाहा। ॐ शेषाय स्वाहा। ॐ पापाय स्वाहा। ॐ रोगाय स्वाहा। ॐ अहये स्वाहा। ॐ मुख्याय स्वाहा। ॐ भल्लाटाय स्वाहा। ॐ सोमाय स्वाहा। ॐ सर्प्पेभ्यः स्वाहा। ॐ अदित्यै स्वाहा। ॐ दित्यै स्वाहा। ॐ अद्भ्यः स्वाहा। ॐ सावित्राय स्वाहा। ॐ जयाय स्वाहा। ॐ रुद्राय स्वाहा। ॐ अर्यम्णे स्वाहा। ॐ सवित्रे स्वाहा। ॐ विवस्वते स्वाहा। ॐ विबुधाधिपाय स्वाहा। ॐ मित्राय स्वाहा। ॐ राजयक्ष्मणे स्वाहा। ॐ पृथ्वीधराय स्वाहा। ॐ आपवत्साय स्वाहा। ॐ ब्रह्मणे स्वाहा। ॐ चरक्यै स्वाहा। ॐ विदार्यै स्वाहा। ॐ पूतनायै स्वाहा। ॐ पापराक्षस्यै स्वाहा। ॐ स्कन्दाय स्वाहा। ॐ अर्यम्णे स्वाहा। ॐ जृम्भकाय स्वाहा। ॐ पिलिपिच्छाय स्वाहा। ॐ इन्द्राय स्वाहा। ॐ अग्नये स्वाहा। ॐ यमाय स्वाहा। ॐ निर्ऋतये स्वाहा। ॐ वरुणाय स्वाहा। ॐ वायवे स्वाहा। ॐ कुबेराय स्वाहा। ॐ ईशानाय स्वाहा। ॐ ब्रह्मणे स्वाहा। ॐ अनन्ताय स्वाहा।

आचार्य निम्न पाँच मन्त्रों का क्रम से उच्चारण करते हुए बिल्वादि पत्रों से कुण्ड में एक सौ आठ बार, एक-एक हवन करनेवाले ब्राह्मण से हवन करावें। यहाँ भी विभाग नहीं है। इस प्रकार एक सौ आठ आहुति कुण्ड में प्रदान करें—

ॐ वास्तोष्पते प्रति जानीह्यस्मान्त्स्वावेशो अनमीवो भवा नः। यत्त्वेमहे प्रति तन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे स्वाहा॥ १॥ ॐ वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो। अजरासस्ते सख्ये स्याम पितेव पुत्रान्प्रति तन्नो जुषस्व स्वाहा॥ २॥ ॐ वास्तोष्पते शग्मया संसदा ते सक्षीमहि रण्वया गातुमत्या। पाहि क्षेम उत योगे वरं नो

यूयं पात स्वस्तिभिः सदा नः स्वाहा॥ ३॥ ॐ अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन्। सखासुशेव एधि नः स्वाहा॥ ४॥ ॐ वास्तोष्पते ध्रुवा स्थूणांऽसत्रं सोम्यानाम्। द्रप्सो भेत्ता पुरां शश्वतीनामिन्द्रो मुनीनां सखा स्वाहा॥ ५॥

## अघोरहोमः

आचार्य निम्न मन्त्र का उच्चारण करके सभी कुण्डों में एक सौ आठ, एक सौ आठ, आहुति हवन करनेवाले ब्राह्मण से प्रदान करावें। यहाँ भी विभाग नहीं है। अतः एक सौ आठ आहुति कुण्ड में प्रदान करें—

ॐ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः। सर्व्वेभ्यः सर्वशर्व्वेभ्यो नमस्ते ऽअस्तु रुद्ररूपेभ्यः स्वाहा॥

## केवलं नामाऽनुक्रमेण सर्वतोभद्रदेवताहोमः

१. ॐ ब्रह्मणे स्वाहा। २. ॐ सोमाय स्वाहा। ३. ॐ ईशानाय स्वाहा। ४. ॐ इन्द्राय स्वाहा। ५. ॐ अग्नये स्वाहा। ६. ॐ यमाय स्वाहा। ७. ॐ निर्ऋतये स्वाहा। ८. ॐ वरुणाय स्वाहा। ९. ॐ वायवे स्वाहा। १०. ॐ अष्टवसुभ्यो स्वाहा। ११. ॐ एकादशरुद्रेभ्यः स्वाहा। १२. ॐ द्वादशादित्येभ्यः स्वाहा। १३. ॐ अश्विभ्यां स्वाहा। १४. ॐ सपैतृकविश्वेभ्यो देवेभ्यः स्वाहा। १५. ॐ सप्तयक्षेभ्यः स्वाहा। १६. ॐ नागेभ्यः स्वाहा। १७. ॐ गन्धर्वाप्सरोभ्यः स्वाहा। १८. ॐ स्कन्दाय स्वाहा। १९. ॐ नन्दीश्वराय स्वाहा। २०. ॐ शूलाय स्वाहा। २१. ॐ महाकालाय स्वाहा। २२. ॐ दक्षादिभ्यः स्वाहा। २३. ॐ दुर्गायै स्वाहा। २४. ॐ विष्णवे स्वाहा। २५. स्वधायै स्वाहा। २६. ॐ मृत्युरोगेभ्य स्वाहा। २७. ॐ गणपतये स्वाहा। २८. ॐ अद्‌भ्य स्वाहा। २९. ॐ मरुद्‌भ्यः स्वाहा। ३०. ॐ पृथिव्यै स्वाहा। ३१. ॐ गङ्गादिनदीभ्यः स्वाहा। ३२. ॐ सप्तसागरेभ्यः स्वाहा। ३३. ॐ मेरवे

स्वाहा। ३४. ॐ गदायै स्वाहा। ३५. ॐ त्रिशूलाय स्वाहा। ३६. ॐ व्रजाय स्वाहा। ३७. ॐ शक्तये स्वाहा। ३८. ॐ दण्डा स्वाहा। ३९. ॐ खड्गाय स्वाहा। ४०. ॐ पाशाय स्वाहा। ४१. ॐ अङ्कुशाय स्वाहा। ४२. ॐ गौतमाय स्वाहा। ४३. ॐ भरद्वाजाय स्वाहा। ४४. ॐ विश्वामित्राय स्वाहा। ४५. ॐ कश्यपाय स्वाहा। ४६. ॐ जमदग्नये स्वाहा। ४७. ॐ वसिष्ठाय स्वाहा। ४८. ॐ अत्रये स्वाहा। ४९. ॐ अरुन्धत्यै स्वाहा। ५०. ॐ ऐन्द्र्यै स्वाहा। ५१. ॐ कौमार्यै स्वाहा। ५२. ॐ ब्राह्म्यै स्वाहा। ५३. ॐ वाराह्यै स्वाहा। ५४. ॐ चामुण्डायै स्वाहा। ५५. ॐ वैष्णव्यै स्वाहा। ५६. ॐ माहेश्वर्यै स्वाहा। ५७. ॐ वैनायक्यै स्वाहा।

## केवलं नामाऽनुक्रमेण योगिनीहोमः

ॐ गजाननायै स्वाहा, ॐ सिंहमुख्यै स्वाहा, ॐ गृध्रास्यायै स्वाहा, ॐ काकतुण्डिकायै स्वाहा, ॐ उष्ट्रग्रीवायै स्वाहा, ॐ हयग्रीवायै स्वाहा, ॐ वाराह्यै स्वाहा, ॐ शरभाननायै स्वाहा, ॐ उलूकिकायै स्वाहा, ॐ शिवारावायै स्वाहा, ॐ मयूरायै स्वाहा, ॐ विकटाननायै स्वाहा, ॐ अष्टवक्त्रायै स्वाहा, ॐ कोटराक्ष्यै स्वाहा, ॐ कुब्जायै स्वाहा, ॐ विकटलोचनायै स्वाहा, ॐ शुष्कोदर्यै स्वाहा, ॐ ललजिह्वायै स्वाहा, ॐ श्वदष्ट्रायै स्वाहा, ॐ वानराननायै स्वाहा, ॐ ऋक्षाभ्यै स्वाहा, ॐ केकराक्ष्यै स्वाहा, ॐ बृहत्तुण्डायै स्वाहा, ॐ सुराप्रियायै स्वाहा, ॐ कपालहस्तायै स्वाहा, ॐ रक्ताक्ष्यै स्वाहा, ॐ शुक्यै स्वाहा, ॐ श्येन्यै स्वाहा, ॐ कपोतिकायै स्वाहा, ॐ पाशहस्तायै स्वाहा, ॐ दण्डहस्तायै स्वाहा, ॐ प्रचण्डायै स्वाहा, ॐ चण्डविक्रमायै स्वाहा, ॐ शिशुघ्न्यै स्वाहा, ॐ पापहन्त्र्यै स्वाहा, ॐ काल्यै स्वाहा, ॐ रुधिरपायिन्यै स्वाहा, ॐ वसाधयायै स्वाहा, ॐ गर्भभक्षायै स्वाहा, ॐ शवहस्तायै स्वाहा, ॐ आन्त्रमालिन्यै स्वाहा, ॐ

स्थूलकेश्यै स्वाहा, ॐ बृहत्कुक्ष्यै स्वाहा, ॐ सर्पास्यायै स्वाहा, ॐ प्रेतवाहिन्यै स्वाहा, ॐ दन्दशूकरायै स्वाहा, ॐ क्रौञ्च्यै स्वाहा, ॐ मृगशीर्षायै स्वाहा, ॐ वृषाननायै स्वाहा, ॐ व्यात्तास्यायै स्वाहा, ॐ धूम्रनिश्वासायै स्वाहा, ॐ व्योमैकचरणोर्ध्वदृशे स्वाहा, ॐ तापिन्यै स्वाहा, ॐ शोषिणीदृष्ट्यै स्वाहा, ॐ कोटर्यै स्वाहा, ॐ स्थूल-नासिकायै स्वाहा, ॐ विद्युत्प्रभायै स्वाहा, ॐ बलाकास्यायै स्वाहा, ॐ मार्जायै स्वाहा, ॐ कटपूतनायै स्वाहा, ॐ अट्टाट्टहासायै स्वाहा, ॐ कामाक्ष्यै स्वाहा, ॐ मृगाक्ष्यै स्वाहा, ॐ मृगलोचनायै स्वाहा।

## केवलं नामाऽनुक्रमेण क्षेत्रपालहोमः

ॐ अजराय स्वाहा, ॐ व्यापकाय स्वाहा, ॐ इन्द्रचौराय स्वाहा, ॐ इन्द्रमूर्तये स्वाहा, ॐ उक्ष्णे स्वाहा, ॐ कूष्माण्डाय स्वाहा, ॐ वरुणाय स्वाहा, ॐ वटुकाय स्वाहा, ॐ विमुक्ताय स्वाहा, ॐ लिप्तकाय स्वाहा, ॐ नीललोकाय स्वाहा, ॐ एकदंष्ट्राय स्वाहा, ॐ ऐरावताय स्वाहा, ॐ ओषधीघ्नाय स्वाहा, ॐ बन्धनाय स्वाहा, ॐ दिव्यकरणाय स्वाहा, ॐ कम्बलाय स्वाहा, ॐ भीषणाय स्वाहा, ॐ गवयाय स्वाहा, ॐ घंटाय स्वाहा, ॐ व्यालाय स्वाहा, ॐ अंशवे स्वाहा, ॐ चन्द्रवारुणाय स्वाहा, ॐ घटाटोपाय स्वाहा, ॐ जटिलाय स्वाहा, ॐ क्रतवे स्वाहा, ॐ घण्टेश्वराय स्वाहा, ॐ विकटाय स्वाहा, ॐ मणिमाणाय स्वाहा, ॐ गणबन्धाय स्वाहा, ॐ मुण्डाय स्वाहा, ॐ बर्बूकराय स्वाहा, ॐ सुधापाय स्वाहा, ॐ वैनाय स्वाहा, ॐ पवनाय स्वाहा, ॐ ढुण्ढकरणाय स्वाहा, ॐ स्थविराय स्वाहा, ॐ दन्तुराय स्वाहा, ॐ धनदाय स्वाहा, ॐ नागकर्णाय स्वाहा, ॐ महाबलाय स्वाहा, ॐ फेत्काराय स्वाहा, ॐ वीरकाय स्वाहा, ॐ सिंहाय स्वाहा, ॐ मृगाय स्वाहा, ॐ यक्षाय स्वाहा, ॐ मेघवाहनाय स्वाहा, ॐ तीक्ष्णाय स्वाहा, ॐ अमराय स्वाहा, ॐ शुक्राय स्वाहा।

## प्रधानाहुतिः

आचार्य धूमावतीदेवी की प्रतिष्ठा में निम्न वैदिक मन्त्र का उच्चारण करते हुए एक सौ आठ बार हवन कुण्ड में आहुति यजमान से प्रदान करावें—

**ॐ धूम्रा बभ्रुनीकाशा पितृणार्ठ० सोमवतां बभ्रवो धूम्रनीकाशाः पितृणां बर्हिषदां कृष्णा बभ्रुनीकाशाः पितृणामग्निष्वात्तानां कृष्णाः पृषन्तस्त्रैयम्बकाः स्वाहा॥** (शु०य०सं० २४/१८)

## धूमावत्यष्टोत्तरशतनामावल्या हवनम्

आचार्य धूमावती के निम्न नामों का क्रमानुसार उच्चारण करते हुए यजमान से प्रत्येक नाममन्त्र के द्वारा कुण्ड में हवन करावें—

१. ॐ धूमावत्यै स्वाहा।
२. ॐ धूम्रवर्णायै स्वाहा।
३. ॐ धूम्रपानपरायणायै स्वाहा।
४. ॐ धूम्राक्षमथिन्यै स्वाहा।
५. ॐ धन्यायै स्वाहा।
६. ॐ धन्यस्थाननिवासिन्यै स्वाहा।
७. ॐ अघोराचारसन्तुष्टायै स्वाहा।
८. ॐ अघोराचारमण्डितायै स्वाहा।
९. ॐ अघोरमन्त्रसम्प्रीतायै स्वाहा।
१०. ॐ अघोरमन्त्रपूजितायै स्वाहा।
११. ॐ अट्टाट्टहासनिरतायै स्वाहा।
१२. ॐ मलिनाम्बरधारिण्यै स्वाहा।
१३. ॐ वृद्धायै स्वाहा।
१४. ॐ विरूपायै स्वाहा।
१५. ॐ विधवायै स्वाहा।
१६. ॐ विद्यायै स्वाहा।
१७. ॐ विरलद्विजायै स्वाहा।
१८. ॐ प्रवृद्धघोणायै स्वाहा।
१९. ॐ कुमुख्यै स्वाहा।
२०. ॐ कुटिलायै स्वाहा।
२१. ॐ कुटिलेक्षणायै स्वाहा।
२२. ॐ कराल्यै स्वाहा।
२३. ॐ करालास्यायै स्वाहा।
२४. ॐ कङ्काल्यै स्वाहा।
२५. ॐ शूर्पधारिण्यै स्वाहा।
२६. ॐ काकध्वजरथारूढायै स्वाहा।
२७. ॐ केवलायै स्वाहा।
२८. ॐ कठिनायै स्वाहा।
२९. ॐ कुह्वै स्वाहा।
३०. ॐ क्षुत्पिपासार्दितायै स्वाहा।
३१. ॐ नित्यायै स्वाहा।
३२. ॐ ललज्जिह्वायै स्वाहा।
३३. ॐ दिगम्बर्यै स्वाहा।
३४. ॐ दिर्घोदर्यै स्वाहा।
३५. ॐ दिर्घरवायै स्वाहा।
३६. ॐ दिर्घाङ्ग्यै स्वाहा।
३७. ॐ दीर्घमस्तकायै स्वाहा।
३८. ॐ विमुक्तकुन्तलायै स्वाहा।
३९. ॐ कीर्त्यायै स्वाहा।
४०. ॐ कैलासस्थानवासिन्यै स्वाहा।
४१. ॐ क्रूरायै स्वाहा।
४२. ॐ कालस्वरूपायै स्वाहा।

४३. ॐ कालचक्रप्रवर्तिन्यै स्वाहा।
४४. ॐ विवर्णायै स्वाहा।
४५. ॐ चञ्चलायै स्वाहा।
४६. ॐ दुष्टायै स्वाहा।
४७. ॐ दुष्टविध्वंसकारिण्यै स्वाहा।
४८. ॐ चण्ड्यै स्वाहा।
४९. ॐ चण्डस्वरूपायै स्वाहा।
५०. ॐ चामुण्डायै स्वाहा।
५१. ॐ चण्डनिःस्वनायै स्वाहा।
५२. ॐ चण्डवेगायै स्वाहा।
५३. ॐ चण्डगत्यै स्वाहा।
५४. ॐ चण्डविनाशिन्यै स्वाहा।
५५. ॐ मुण्डविनाशिन्यै स्वाहा।
५६. ॐ चाण्डालिन्यै स्वाहा।
५७. ॐ चित्ररेखायै स्वाहा।
५८. ॐ चित्राङ्ग्यै स्वाहा।
५९. ॐ चित्ररूपिण्यै स्वाहा।
६०. ॐ कृष्णायै स्वाहा।
६१. ॐ कपर्दिन्यै स्वाहा।
६२. ॐ कुल्लायै स्वाहा।
६३. ॐ कृष्णारूपायै स्वाहा।
६४. ॐ क्रियावत्यै स्वाहा।
६५. ॐ कुम्भस्तन्यै स्वाहा।
६६. ॐ महोन्मत्तायै स्वाहा।
६७. ॐ मदिरापानविह्वलायै स्वाहा।
६८. ॐ चतुर्भुजायै स्वाहा।
६९. ॐ ललज्जिह्वायै स्वाहा।
७०. ॐ शत्रुसंहारकारिण्यै स्वाहा।
७१. ॐ शवारूढायै स्वाहा।
७२. ॐ शवगतायै स्वाहा।
७३. ॐ श्मशानस्थानवासिन्यै स्वाहा।
७४. ॐ दुराराध्यायै स्वाहा।
७५. ॐ दुराचारायै स्वाहा।
७६. ॐ दुर्जनप्रीतिदायिन्यै स्वाहा।
७७. ॐ निर्मांसायै स्वाहा।
७८. ॐ निराकारायै स्वाहा।
७९. ॐ धूमहस्तायै स्वाहा।
८०. ॐ वरान्वितायै स्वाहा।
८१. ॐ कलहायै स्वाहा।
८२. ॐ कलिप्रीतायै स्वाहा।
८३. ॐ कलिकल्मषनाशिन्यै स्वाहा।
८४. ॐ महाकालस्वरूपायै स्वाहा।
८५. ॐ महाकालप्रपूजितायै स्वाहा।
८६. ॐ महादेवप्रियायै स्वाहा।
८७. ॐ मेधायै स्वाहा।
८८. ॐ महासङ्कटनाशिन्यै स्वाहा।
८९. ॐ भक्तप्रियायै स्वाहा।
९०. ॐ भक्तगत्यै स्वाहा।
९१. ॐ भक्तशत्रुविनाशिन्यै स्वाहा।
९२. ॐ भैरव्यै स्वाहा।
९३. ॐ भुवनायै स्वाहा।
९४. ॐ भीमायै स्वाहा।
९५. ॐ भारत्यै स्वाहा।
९६. ॐ भुवनात्मिकायै स्वाहा।
९७. ॐ भेरुण्डायै स्वाहा।
९८. ॐ भीमनयनायै स्वाहा।
९९. ॐ त्रिनेत्रायै स्वाहा।
१००. ॐ बहुरूपिण्यै स्वाहा।
१०१. ॐ त्रिलोकेश्यै स्वाहा।
१०२. ॐ त्रिकालज्ञायै स्वाहा।
१०३. ॐ त्रिस्वरूपायै स्वाहा।
१०४. ॐ त्रयीतनवे स्वाहा।
१०५. ॐ त्रिमूर्त्यै स्वाहा।
१०६. ॐ तन्व्यै स्वाहा।
१०७. ॐ त्रिशक्त्यै स्वाहा।
१०८. ॐ त्रिशूलिन्यै स्वाहा।

यजमान अपनी धर्मपत्नी, आचार्य और ब्राह्मणों के साथ वाद्यघोष से युक्त होकर शिल्पशाला में जाकर धूमावती देवी की मूर्ति के सम्मुख प्राणायामादि करके यह संकल्प करें—**धूमावतीप्रतिमानिर्माणे प्राणिदोष-निरासार्थं घृतेन तिलैर्वा होमं करिष्ये॥**

संकल्प के पश्चात् कलशस्थापनविधि कलश स्थापित कर 'ॐ मनोजूति०' इस मन्त्र द्वारा प्रतिष्ठा करके निम्न श्लोकों द्वारा तीर्थों का आवाहन करें—

**काशी कुशस्थली मायाऽवन्त्योध्या मधोः पुरी।**
**शालिग्रामः सगोकर्णः नर्मदा च सरस्वती॥ १॥**
**गङ्गायाः सरितः सर्वाः समुद्राश्च सरांसि च।**
**वृषारूढा सरोजाक्षी पद्महस्ता शशिप्रभा॥ २॥**
**आगच्छन्तु सरिज्ज्येष्ठा गङ्गापापप्रणाशिनी।**
**नीलोत्पलदलश्यामा पद्महस्ताम्बुजेक्षणा॥ ३॥**
**आयातु यमुना देवी कूर्मयानस्थिता सदा।**
**प्राची सरस्वती पुण्या पयोष्णी गौतमी तथा॥ ४॥**
**उर्मिला चन्द्रभागा च सरयू गण्डकी तथा।**
**एता नद्याश्च तीर्थानि गुह्यक्षेत्राणि सर्वशः।**
**तानि सर्वाणि कुम्भेऽस्मिन् विशन्तु ब्रह्मशासनात्॥ ५॥**

**इति तीर्थान्यावाह्य सम्पूज्य कुम्भस्य चतुर्दिक्षु विदिक्षु च—ॐ इन्द्राय नमः। ॐ अग्नये नमः। ॐ यमाय नमः। ॐ निर्ऋतये नमः। ॐ वरुणाय नमः। ॐ कुबेराय नमः। ॐ ईशानाय नमः। इत्यष्ट-लोकपालान् गन्धादिभिः सम्पूज्य प्रतिमादिषु न्यूनातिरिक्तपाषाण-दोषोपशमनार्थं प्रतिमायोग्यं स्थण्डिलं कृत्वा पञ्चभूसंस्कारपूर्वक-मग्निस्थापनपूर्वककुशकण्डिकादिकं समाप्य धूमावतीम[1]न्त्रेण प्रत्येकं**

१. ॐ धूम्रा बभ्रुनीकाशा पितृणाठं० सोमवतां बभ्रवो धूम्रनीकाशाः पितृणां बर्हिषदां कृष्णा बभ्रुनीकाशाः पितृणामग्निष्वात्तानां कृष्णाः पृषन्तस्त्रैयम्बकाः॥

**शतसंख्यया हुत्वा पूर्णपात्रविमोकान्ते कर्मेश्वरार्पणं कृत्वा भूयसीं दद्यात्। शिल्पिनेऽपि रत्नादिकं च दद्यात्।**

## जलाधिवास:

यजमान अपनी पत्नी के साथ कारुशाला में जाकर कुशासन के आसन पर बैठकर आचमन और प्राणायाम करे। उस समय आचार्य सहित ब्राह्मण शान्तिपाठ का उच्चारण कर यजमान से इस संकल्प को करावें—**देशकालौ सङ्कीर्त्य—अमुकगोत्रोऽमुकशर्माहम् ( वर्माऽहम्, गुप्तोऽहम्, दासोऽहम् ) धूमावतीदेवतायोग्यताधिष्ठानसिद्ध्यर्थं जलाधिवासाख्यं कर्म करिष्ये॥**

यजमान के बायें हाथ में आचार्य पीली सरसों देकर निम्न श्लोक का उच्चारण करते हुए चारों दिशाओं में उससे छिड़कवाकर भूतादिकों को हटावें—

**यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वदा।**
**स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु॥ १॥**
**अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः।**
**ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया॥ २॥**
**अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम्।**
**सर्वेषामविरोधेन प्रतिष्ठेयं समारभे॥ ३॥**
**भूतप्रेतपिशाचाद्या अपक्रामन्तु राक्षसाः।**
**स्थानादस्माद् व्रजन्त्वन्यत् स्वीकरोमि भुवम् त्विमाम्॥ ४॥**
**भूतानि राक्षसा वाऽपि यत्र तिष्ठन्ति केचन।**
**ते सर्वेऽप्यपगच्छन्तु प्रतिष्ठां च करोम्यहम्॥ ५॥**

पूर्वाभिमुख या उत्तराभिमुख धूमावतीदेवी का स्थापन कर सप्त-मृत्तिकादि से स्नान करवाकर ही उनका व्रणभंग करें। फिर अग्न्युत्तारण करवाकर पुरुषसूक्त के सोलह मन्त्रों का उच्चारण करते हुए यजमान से प्रार्थना करावें। तदुपरान्त जलद्रोणी में धूमावतीदेवी का अधिवासन करें, यह अधिवासन स्नानमण्डप में भी हो सकता है।

## धान्याधिवासः

यजमान अपनी पत्नी के साथ आसन पर बैठकर देशकाल का स्मरण करते हुए यह संकल्प करे—'**मम गृहे प्रचुरधान्यपुत्रपौत्रादिसुख-सम्पत्त्यादिनिवासार्थं धान्याधिवासं करिष्ये**'। इस संकल्प का उच्चारण करके पवित्र भूमि में धान्य को गिराकर धूमावतीदेवी की मूर्ति को शयन कराकर, मूर्ति के ऊपर प्रचुर धान्य परिवार के सभी लोग प्रक्षेप करें। इसके उपरान्त ही षोडशोपचार से अथवा पञ्चोपचार से पूजा करें।

## घृताधिवासः

**घृतं गव्यं तेजो बलिमतिकरं सत्त्वगुणदं**
**पवित्रं चायुष्यं त्रिदशदयितं मङ्गलकरम्।**
**घृतानां सर्वेषां सुखदमधिवासो श्रुतिमतं**
**सदा देवा हृष्ट्या विपुलवरदा याज्ञिकजने॥ १॥**
**रसेषु सर्वेषु प्रधानरूपं गुणं सुराणां मधुरं मखाङ्गम्।**
**घृताधिवासात्सुरतामुपेता भवन्ति देवा बहुमोदमानाः॥ २॥**

**भावार्थ**—घृत अत्यन्त तेज और बल को देनेवाला है, सत्त्वगुण देनेवाला है, पवित्र है और आयुष्य है, देवताओं को प्रिय है। मंगल करनेवाला है। सभी घी का अधिवास सुखद होता है और श्रुति से समर्पित है। (इस अधिवास से) देवता लोग प्रसन्न हो करके यज्ञ करनेवाले को सदैव वर देते हैं॥ १॥ घी सभी रसों में प्रधान है, देवताओं के लिए गुण (प्रसन्नता) देनेवाला है, मधुर है और यज्ञ का अंग है। घृताधिवास से सुख प्राप्त करके देवता लोग अत्यन्त प्रसन्न होते हैं॥ २॥

## गन्धाधिवासः

**अगरतगरपूर्णमष्टगन्धं कपूरं बहुकुसुमसुगन्धी अत्तरं केशरं च।**
**नृपतिधनिकलोकैः सप्ततन्तौ सुयोज्यं सकलसुरहितार्थं धर्मकामार्थमूलम्॥**

**भावार्थ**—सभी देवताओं की प्रसन्नता के लिए तथा धर्म, काम एवं अर्थ को देनेवाला अगर-तगर से पूर्ण अष्टगंध, कपूर, अनेक प्रकार के सुगन्धित पुष्प, अतर और केसर को राजा एवं धनिकों के द्वारा सात डोरे में ठीक से गूंथना चाहिए।

## पुष्पाधिवासः

**चम्पाचमेलीकमलानि जूहीगुलाबवेलारजनीसुगन्धा**
**दुर्वाशमीजीवकगन्धराजं गेन्दाधतूरागुलमेहदीं च।**
**अगस्तिकां सूर्यमुखीकनेरं शेफालिकानामकपारिजातं**
**तिलस्य पुष्पं हरशृङ्गहारं मालारपत्रं तुलसीमदारम्॥**

**भावार्थ**—चम्पा, चमेली, कमल, जूही, गुलाब, बेला, रजनीगन्धा, दूर्वा, शमी, जीवक, गन्धराज, अगस्तिका, सूर्यमुखी, कनेर, शैफालिका और पारिजात, तिल का फूल, हरशृंगार, मालार का पत्ता, तुलसी और मदार।

## धूपाधिवासः

**दशाङ्गयुग्गुग्गुललोहवानं ज्वालामुखी धूपवती सुवत्ती।**
**सुगन्धबालाखसदेवदारु धूपाधिवासे विहितं च वेदे॥**

**भावार्थ**—दशाङ्ग, दोनों गुग्गुल, लोहबान, ज्वालामुखी, सुबत्ती, सुगन्धबाला, खस, देवदार ये वेद में धूपाधिवास में लिखे गये हैं।

## फलाधिवासम्

**सुपक्वमङ्गरं कटहरपपीता अमरुतमनारं जम्बूरमरुणसदृशं सतततराम्।**
**अनानासं केला सरसहकारं सहतुतं विजोरामोसमीवरदवदरीसेवमुरई॥**
**सिघाडाजामूनं प्रचुरनसपातिं सिरफलम्।**
**सुराणां वासार्थं फलवरमिदं वेदलिखितम्॥**

यथा सुसाध्यं सुखतः सदैव स्वदेशकालोद्भवजं सुवस्तु।
संगृह्यतां भूपतिभिः सुयज्ञे फलाधिवासे कथितं सुरेष्टम्॥
वादामं छोहाडाकिसमिसचिरौञ्जी अखरूटं
मखाना खर्जूरं हरितपिसता सद्मुमफली।
मुनक्का आवजोसं शुभचिरगुजा सक्करयुतं
सुराणां सन्मेवादयितमधिवासे च कथितम्॥

**भावार्थ**—पका हुआ अंगूर, कटहर, पपीता, अमरूद, अनार, नींबू, संतरा, अनानास, केला, आम, शहतूत, बिजौरा, मुसम्मी, बेर, मूली, सिघाड़ा, जामुन, नाशपाती, श्रीफल ये श्रेष्ठ फल देवताओं के अधिवास के लिये वेद में लिखे गये हैं। उस देश और उस काल में होनेवाले आसानी से सुखपूर्वक संग्रहीत होनेवाले फलों का संग्रह देवताओं की प्रसन्नता के लिए फलाधिवास में राजाओं के द्वारा किया जाना चाहिए। बादाम, छुहारा, किशमिश, चिरौंजी, अखरोट, मखाना, खजूर, पिस्ता, मूँगफली, मुनक्का, चिलगोजा आदि मेवा देवताओं की प्रसन्नता के लिये अधिवास में कहे गये हैं।

## मिष्ठान्नाधिवासम्

बालस्याहीजलेवीचमचमवरफीमोहनंलप्सिमुख्यं
कुष्माण्डैः पाकपेडासरसरगुलासोहनं पापडीकम्।
खोवापूडी इमर्तीबहुलगुणगुलाजामुनं खीरमोहम्
लड्डूबुन्दीमिठाईसुरगणप्रियदं यज्ञकार्ये सुयोज्यम्॥
पूआ पूडी कचौडी उरदजवटकं गन्धितं हिङ्गजीरैः
नानाप्रकारपूर्णमगणितरसभृद् व्यञ्जनं चारुलेह्यम्।
सन्तोषप्रेमकारी शिखरनदधि युग्वासहेतोः सुराणां
श्रेष्ठे यज्ञे कवीन्द्रैर्बहुविधकथितं यत्नतो योजनीयम्॥

**भावार्थ**—बालू स्याही, जलेबी, चमचम, बरफी, मोहनभोग ये प्रधान हैं। इनके साथ भतुआपाक (पेठा), पेड़ा, रसगुल्ला, सोहनहलुआ, पपड़ी, खोवापूड़ी (मालपूआ), इमरती, गुलाबजामुन, खीरमोहन, लड्डू, बूंदी आदि मिठाई देवताओं की प्रसन्नता के लिए मिष्ठान्नाधिवास में संग्रह करनी चाहिए। पूआ, पूड़ी, कचौड़ी, उड़द का बाड़ा, हींग और जीरा से सुवासित नाना प्रकार के रस से भरे हुए व्यंजन और चटनी, सिखरन दही आदि देवताओं के प्रेम एवं प्रसन्नता के लिये श्रेष्ठ यज्ञ (प्रतिष्ठा) में अधिवास के लिये बहुविध प्रयत्न से जुटाना चाहिए। ऐसा विद्वानों का कथन है।

मिष्ठानाधिवास के उपरान्त आचार्य औषध्याधिवास भी करावें।

## देवस्नपनम्

स्नान मण्डप में आचार्य प्रधानस्थापन मन्त्र द्वारा पञ्चगव्य को अभिमन्त्रित करके उससे स्नान मण्डप का प्रोक्षण कर बालू की तीन वेदियों पर अक्षत द्वारा 'स्वस्तिक' बनाकर उसमें तीन महापीठ को रखकर निम्न श्लोक का उच्चारण करके विश्वकर्माजी का ध्यान यजमान से करावे—

**ॐ विश्वकर्मा तु कर्तव्यः श्मश्रुलोमांशलाधरः।**
**स्नदंशपाणिर्द्विभुजस्तेजोमूर्तिः प्रतापवान्॥**

**इति ध्यात्वा ततः—सप्तधान्येषु त्रिसूत्रीवेष्टितसपल्लववारिपूर्णकलशानामाजिघ्रेति स्थापनम्। तत्र दक्षिणवेद्याः पश्चाद् द्वादशकलशा उदक्संस्थाः प्राक्संस्था वा अत्रान्यो द्वादशः स्थापतिसंज्ञकः कलशः। तत्र क्रमेण पञ्चसु कलशेषु—१. मृत्तिका, २. पञ्चपल्लव वृक्षीयकषाय, ३. गोमूत्र, ४. गोबर, ५. भस्म। इति प्रक्षिप्य शेषेषु सप्तसु गन्धोदकं प्रक्षिपेत्। एवं मध्यवेदेः पश्चादेकादश कलशाः पूर्वोक्तद्रव्ययुताः स्थाप्या। नात्र स्थापितकलशो द्वादशः। उत्तरवेदेः पश्चात्—प्रथमपङ्क्तौ—पञ्च शुद्धोदककलशाः। द्वितीयपङ्क्तौ-विंशतिकलशाः। तत्र विषमेषु अष्टपलमृत्तिका—१. सप्तपलगोमयम्,**

२. द्वादशपलं गोमूत्रम्, ३. मुष्टिमितं भस्म, ४. त्रिपल्लवपञ्चगव्यम्, ५. षोडशपलं क्षीरम्, ६. विंशतिपलं दधि, ७. सप्तपलं घृतम्, ८. त्रिपलं मधु, ९. त्रिपलं शर्करा, १०. इति क्षिपेत्। समेषु शुद्धोदकमेव। तृतीयपङ्क्तौ—द्वौ शुद्धोदकयुतौ। चतुर्थपङ्क्तौ—षट् तत्राद्ये पञ्चामृतम्, अन्येषु शुद्धोदकम्। पञ्चमपङ्क्तौ—द्वौ चतुर्दशकलशाः—तेषु क्रमेण—गन्धः १, पञ्चपल्लवकषायः २, सर्वौषध्यः ३, सितपुष्पाणि ४, शान्त्युदकम् ५, अष्टौ फलानि ६, सुवर्णम् ७, गोश्रृङ्गोदकम् ८, सप्तधान्यानि ९, सहस्त्रछिद्रकलशः तत्सहायार्थोऽप्येकः १०, पुनः दिव्यौसर्वौषध्यः ११, पञ्चपल्लवाः १२, रक्षानि नव १३, तीर्थोदकम् १४, इति प्रक्षिपेत्। वेदिकोऽष्टौ पूर्वाद्यष्टदिक्षु समुद्रसंज्ञकाः कलशाः। एतान् कलशान्—ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक ऽआसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥ १॥ यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव। य ईशे अस्य द्विपदश्चतुष्पद कस्मै देवाय हविषा विधेम॥ २॥ यस्येमे हिमवन्तो महित्वा यस्य समुद्रं रसया सहाहुः। यस्येमाः प्रदिशो यस्य बाहु कस्मै देवाय हविषा विधेम॥ ३॥ य आत्मदा वलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः। यस्य छायामृत्तं यस्य मृत्युः कस्मै देवाय हविषा विधेम॥ ४॥ आपो ह यद्वृहतीविश्वमायन् गर्भं दधाना जनयन्ती-रग्निम्। ततो देवानां समवर्ततासुरे कः कस्मै देवाय हविषा विधेम॥ ५॥ यश्चिदापो महिना पर्यपश्यद् दक्षं दधानां जनयन्तीर्यज्ञम्। यो देवेष्वधि देव एक आसीत् कस्मै देवाय हविषा विधेम॥ ६॥ येन द्यौरुग्रा पृथिवी च हडहा येन स्वः स्तभितं येन नाकः। यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम॥ ७॥ वेनस्तत्पश्यन्निहितं गुहा सद्यत्र विश्वं भवत्येकनीडम्। तस्मिन्निदर्ठ०सं च वि चैति सर्वर्ठ० स ओतः प्रोतश्च विभूः प्रजासु॥ ८॥ इति मन्त्रैः विन्यस्य ततः—तेषु क्षारोदकम् १, क्षीरम् २, दधि ३, घृतम् ४, इक्षुरसः ५, सुरोदकम् ६, स्वादूदकम् ७,

गर्भोदकम् ८, इति प्रक्षिपेत्। षष्ठपङ्क्तौ—दश, तेषु—कदम्ब १, शाल्मली २, जम्बू ३, अशोक ४, प्लक्ष ५, चूत ६, वट ७, विल्व ८, नाग ९, पलाश १० पत्राणि निक्षिपेत्। एषु दशसु क्रमेण लोकपालानप्यावाहयेत्। सप्तमपङ्क्तौ—चत्वारौ बृहत्कलशाः। एको वा सूक्ष्मसितवस्त्रं—सुगन्धतैलं—यव—शालि—गोधूम मसूरिका—बिल्व—आमलक-चूर्णमुद्वर्तनार्थम्। अन्यत्सुगन्धितवस्तु च—

कस्तूरिकाया द्वौ भागौ द्वौ भागौ कुङ्कुमस्य च।
चन्दनस्य त्रयो भागाः शशिनस्त्वेक एव हि॥

इति लक्षणकं यक्षकर्दमं जटामासीं चासादयेत्। ततः पञ्चम-पङ्क्तिस्थते अन्तिमे चतुर्दशे तीर्थोदककलशे—

सर्वे समुद्राः सरितस्तीर्थानि जलदानदाः।
आयान्तु यजमानस्य दुरितक्षयकारिकाः॥

जल से धूमावतीदेवी की मूर्ति को बाहर निकालकर निम्न श्लोकों का उच्चारण करके प्रार्थना करें—

कल्पादौ या कालिकाद्याऽचीकलन्मधुकैटभौ।
कल्पान्ते त्रिजगत्सर्वं धूमावतीं भजामि ताम्॥ १॥
गुणागाराऽगम्यगुणा या गुणागुणवर्धिनी।
गीता वेदार्थतत्त्वज्ञैर्धूमावतीं भजामि ताम्॥ २॥
खट्वाङ्गधारिणी खर्वाखण्डिनी खलरक्षसाम्।
धारिणी खेटकस्यापि धूमावतीं भजामि ताम्॥ ३॥
घूर्णघूर्णकरा घोरा घूर्णिताक्षी घनस्वना।
घातिनी घातकानां या धूमावतीं भजामि ताम्॥ ४॥
चर्वन्तीमस्थिखण्डानां चण्ड-मुण्डविदारिणीम्।
चण्डाट्टहासिनीं देवीं भजे धूमावतीमहम्॥ ५॥
छिन्नग्रीवां क्षताच्छन्नां छिन्नमस्तस्वरूपिणीम्।
छेदिनीं दुष्टसङ्घानां भजे धूमावतीमहम्॥ ६॥

जाता या याचिता देवैरसुराणां विघातिनी।
जल्पन्ती बहु गर्जन्ती भजे तां धूम्ररूपिणीम्॥ ७॥

ॐ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे। उप प्रयन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा॥ इति मन्त्रेण उत्थाप्य अग्न्युत्तारणं च कृत्वा धूमावतीप्रतिमां कुशैः संमार्ज्य मधुघृताभ्यङ्गेन व्रणभङ्गं कृत्वा सम्पूज्य पञ्चगव्येन पृथक् पृथक् जलान्तरितेन स्नापयित्वा पुनः सम्पूज्य शङ्खादिनादेन रथादिना महामण्डपप्रादक्षिण्येन स्नानमण्डपमानयेत्। गुरुर्दक्षिणवेद्यां कुशास्तृते—ॐ स्तीर्णं बर्हिः सुष्टरीमा जुषाणोरु पृथु प्रथमानं पृथिव्याम्। देवेभिर्युक्तमदितिः सजोषाः स्योनं कृण्वाना सुविते दधातु॥ १॥ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि देवहितं यदायुः॥ २॥ इति मन्त्राभ्यां प्राङ्मुखं धूमावतीं देवीं निवेश्य स्थपतिसंज्ञं कलशं हिरण्य-वस्त्ररत्नादिकसहितं धूमावतीदेविसमीपे निधाय तत्र तीर्थान्यावाहयेत्। तद्यथा—

ॐ काशी कुशस्थली मायाऽवन्त्ययोध्या मधोः पुरी।
शालग्रामं सगोकर्णं नर्मदा च सरस्वती॥ १॥
तीर्थान्येतानि कुम्भेऽस्मिन्विशन्तु ब्रह्मशासनात्।
झषारूढा सरोजाक्षी पद्महस्ता शशिप्रभा॥ २॥
आगच्छतु सरिज्ज्येष्ठा गङ्गापापप्रणाशिनी।
नीलोत्पलदलश्यामा पद्महस्ताऽम्बुजेक्षणा॥ ३॥
आयातु यमुनादेवी कूर्मयानस्थिता सदा।
प्राची सरस्वती पुण्या पयोष्णी गौतमी तथा॥ ४॥
ऊर्मिला चन्द्रभागा च सरयूर्गण्डकी तथा।
जम्बुका च शतद्रूश्च कलिङ्गा सुप्रभा तथा॥ ५॥
वितस्ता च विपाशा च शर्मदा च पुनः पुनः।
गोदावरी महावर्ता शर्करावर्त्तमार्जनी॥ ६॥

कावेरी कौशिकी चैव तृतीया च महानदी।
विटङ्गा प्रतिकूला च सोमनन्दा च विश्रुता॥ ७ ॥
करतोया वेत्रवती देविका वेणुका च या।
आत्रेयगङ्गा वैतरणी काश्मीरी ह्लादिनी च या॥ ८ ॥
प्लाविनी च शवित्रा सा कल्माषा संशिनी तथा।
वसिष्ठा च अपापा च सिन्धुवत्यारुणी तथा॥ ९ ॥
ताम्रा चैव त्रिसन्ध्या च तथा मन्दाकिनी परा।
तैलकाह्नी च पारा च दुन्दुभीर्नकुली तथा॥ १० ॥
नीलगन्धा च बोधा च पूर्णचन्द्रा शशिप्रभा।
अमरेशं प्रभासं च नैमिषं पुष्करं तथा॥ ११ ॥
आषाढीं डिण्डिभारत्नं भारभूतं बलाकुलम्।
हरिश्चन्द्रं परं गुह्यं मध्यं मध्यमकेश्वरम्॥ १२ ॥
श्रीपर्वतं समाख्यातं जलेश्वरमतः परम्।
आम्नातकेश्वरं चैव महाकालं तथैव च॥ १३ ॥
केदारमुत्तमं गुह्यं, महाभैरवमेव च।
गयां चैव कुरुक्षेत्रं गुह्यं कनखलं तथा॥ १४ ॥
विमलं चन्द्रहासं च माहेन्द्रं भीममष्टकम्।
वस्त्रापदं रुद्रकोटिमविमुक्तं महाबलम्॥ १५ ॥
गोकर्णं भद्रकर्णं च महेशस्थानमुत्तमम्।
छागलाह्वं द्विरण्डं च कर्कोटं मण्डलेश्वरम्॥ १६ ॥
कालञ्जरवनं चैव देवदारुवनं तथा।
शङ्कुकर्णं तथैवेह स्थलेश्वरमतः परम्॥ १७ ॥
एता नद्यश्च तीर्थानि गुह्यक्षेत्राणि सर्वशः।
तानि सर्वाणि कुम्भेऽस्मिन्विशन्तु ब्रह्मशासनात्॥ १८ ॥

इति मन्त्रेण तीर्थान्यावाह्य तेन धूमावतीदेवीं स्नपयेत्। यजमानश्च शिल्पिवर्गं यथाशक्ति पूजयेत्। ततो गुरुर्बहिर्निर्गत्य—करिष्यमाण—

धूमावतीदेविस्नपनाङ्गभूतं सिद्धार्थघृतपायसैः रुद्राय बलिदानं करिष्ये। इति सङ्कल्प्य स्नानमण्डपस्य प्रागादि दिक्षु—ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। ऊर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्॥ इति मन्त्रावृत्या रुद्राय एष सिद्धार्थघृतपायसबलिर्नमः। इति प्रयोगेण सर्वत्र रुद्राय बलि दत्त्वाऽऽचम्य स्नानमण्डपमागत्य उपविश्य—ॐ त्रातार-मिन्द्रमवितारमिन्द्रर्ठ० हवे हवे सुहवर्ठ० शूरमिन्द्रम्। ह्वयामिशक्रं पुरुहूतमिन्द्रर्ठ० स्वस्ति नो मघवा धात्विन्द्रः॥ १॥ त्वं नो अग्ने तव देव पायुभिर्मघोनो रक्ष तन्वश्च वन्द्य। त्राता तोकस्य तनये गवामस्यनिमेषर्ठ० रक्षमाणस्तव व्रते॥ २॥ यमाय त्वाङ्गिरस्वते पितृमते स्वाहा। स्वाहा घर्माय स्वाहा घर्मः पित्रे॥ ३॥ असुन्वन्तमयजमानमिच्छ स्तेनस्येत्या-मन्विहि तस्करस्य। अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु॥ ४॥ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुशर्ठ० स मा न आयुः प्रमोषीः॥ ५॥ आ नो नियुद्भिः शतिनीभिरध्वरर्ठ० सहस्रिणीभिरुपयाहि यज्ञम्। वायो अस्मिन्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः॥ ६॥ वयर्ठ० सोम व्रते तव मनस्तनूषु बिभ्रत। प्रजावन्तः सचेमहि॥ ७॥ तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम्। पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्त्ये॥ ८॥ नमोऽस्तु सर्पेभ्यो ये के च पृथिवी मनु। ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः॥ ९॥ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः। स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः॥ १०॥ इति दशमन्त्रैर्दशदिक्षु—"भो इन्द्र प्राचो रक्ष" "भो आग्नेयो रक्ष" इत्यादि प्रयोगेण रक्षा कुर्यात्। ततो धूमावतीदेव्यग्रे चतुरो ब्राह्मणानुपवेश्य स्वस्तिवाचनं कार्यम्। तद्यथा—भो ब्राह्मणाः धूमावतीदेव्यर्चाशुद्धिस्नपननेत्रोन्मीलनकर्मणः पुण्याहं भवन्तो ब्रुवन्तु। 'ॐ पुण्याहम्३' ॐ पुनन्तु मा देवजनाः पुनन्तु मनसाधियः। पुनन्तु विश्वाभूतानि जातवेदः पुनीहि मा॥ १॥

भो ब्राह्मणाः धूमावतीदेव्यर्चाशुद्धिस्नपननेत्रोन्मीलनकर्मणः कल्याणं भवन्तो ब्रुवन्तु। ॐ कल्याणं कल्याणं कल्याणम्, ॐ यथेमां वाचं कल्याणीमावदानि जनेभ्यः। ब्रह्म राजन्याभ्यार्ठ० शूद्राय चार्याय च स्वाय चारणाय च। प्रियो देवानां दक्षिणायै दातुरिह भूयासमयं मे कामः समृद्ध्यतामुपमादो नमतु॥ २॥ भो ब्राह्मणाः धूमावतीदेव्यर्चा-शुद्धिस्नपननेत्रोन्मीलनकर्मणः ऋद्धिं भवन्तो ब्रुवन्तु। 'ॐ कर्म ऋध्यताम्३' इति ब्राह्मणाः। ॐ सत्रस्य ऋद्धिरस्यगन्म ज्योतिरमृता अभूम। दिवं पृथिव्या अध्यारुहामाविदाम देवान्त्स्वर्ज्योतिः॥ ३॥ भो ब्राह्मणाः धूमावतीप्रतिष्ठाकर्मणे स्वस्ति भवन्तो ब्रुवन्तु। ते च-धूमावतीदेव्यर्चाशुद्धिस्नपनाय नेत्रोन्मीलनकर्मणे च स्वस्ति इति वदेयुः। ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥ ४॥

सङ्कल्पः—कृतस्य पुण्याहवाचनकर्मणः साङ्गतासिद्ध्यर्थं दक्षिणा-द्रव्यं नानानामगोत्रेभ्यो ब्राह्मणेभ्यो विभज्य दातुमहमुत्सृजे। इति सङ्कल्पं कृत्वा यजमानः उपविष्टब्राह्मणेभ्यो चन्दनादिना पूजनपूर्वकं दक्षिणां दत्त्वाऽशिषो गृह्णीयात्। ततः—ॐ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपार्ठ० रेतार्ठ०सि जिन्वति॥ इति मृत्तिकाकलशेन॥ १॥ ॐ यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे। प्र प्र वयममृतं जातवेदसं प्रियं मित्रं न शर्ठ०सिषम्॥ इति कषायोदकेन॥ २॥ ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्॥ गोमूत्रेण॥ ३॥ ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्॥ इति गोमयोदकेन॥ ४॥ ॐ मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः। मा नो वीरान् रुद्र भामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे॥ इति भस्मोदकेन॥ ५॥ ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्॥ इति गन्धोदकेन॥ ६॥ ॐ नमः शंभवाय च मयोभवाय च नमः शङ्कराय च मयस्कराय च नमः

शिवाय च शिवतराय च॥ इति गन्धोदकेन॥ ७॥ ॐ हर्ठ०सः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्॥ इति गन्धोदकेन॥ ८॥ ॐ या ते रुद्र शिवा तनूरघोराऽपापकाशिनी। तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि॥ इति गन्धोदकेन॥ ९॥ ॐ विष्णोर राटमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोऽसि वैष्णवमसि विष्णवे त्वा॥ इति गन्धोदकेन॥ १०॥ ॐ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः। स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः॥ इति गन्धोदकेन॥ ११॥ ततः—ॐ शतं वो अम्ब धामानि सहस्रमुत वो रुहः। अधा शतक्रत्वो यूयमिमं मे अगदं कृत॥ इति दूर्वाक्षतपुष्पैः सम्पूज्य—ॐ सुजातो ज्योतिषा सह शर्म वरूथमासदत्स्वः। वासो अग्ने विश्वरूपर्ठ० संव्ययस्व विभावसो॥ इति प्रथमवेदिनस्नपनम्॥ एवं संस्नाप्य ततः—ॐ ततो मध्यवेद्याम्—ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवार्ठ०सस्तनूभिर्व्यशेमहि देवहितं यदायुः॥ १॥ ॐ स्तीर्णं बर्हिः सुष्टरीमा जुषाणोरु पृथु प्रथमानं पृथिव्याम्। देवेभिर्युक्तमदितिः सजोषाः स्योनं कृण्वाना सुविते दधातु॥ २॥ इति प्रागग्रास्तृतकुशे पीठे भगवतीं धूमावतीदेवीं प्राङ्मुखं निधाय स्वयमुदङ्मुखो भूत्वा कुङ्कुमाक्तेन सूत्रेण मूर्तिमावेष्ट्य मूर्ते मध्यभागे मुखं कल्पयित्वा प्रतिमायां मुखं नेत्राणि सुवर्णशलाकया मध्वाज्याक्तया—ॐ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः॥ इत्यर्द्धर्चेन कल्पयेत्। शलाकया ऊर्ध्वाधः पृथग्भूतं पक्ष्मपुटद्वयं च—ॐ आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च। हिरण्ययेन सविता रथेनादेवो याति भुवनानि पश्यन्॥ इति मन्त्रेण कल्पयेत् नेत्र मध्यभागे त्रिभागेन कनीनिकामपि कल्पयेत्। तदा न कश्चित्पुरतस्तिष्ठेत्। ततः सुवर्णं पायसं भक्ष्यं भोज्यं आदर्शं च शीघ्रं दर्शयेत्। शिल्पी च लोहेनोल्लिखेत्। ततो गुरुर्मधुसर्पिर्भ्याममभ्यज्य—ॐ

इमं मे वरुण श्रुधी हवमद्या च मृडय। त्वामवस्युराचके॥ इति मन्त्रेण शुद्धोदकेन लौकिकेनाभ्युक्ष्य स्थापितैकादशकलशैः स्नापयेत्पूर्ववत्— ॐ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपाꣳ० रेताꣳ०सि जिन्वति। इति मृत्तिकाकलशेन॥ १॥ ॐ यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे। प्र प्र वयममृतं जातवेदसं प्रियं मित्रं न शꣳ०सिषम्॥ इति कषायोदकेन॥ २॥ ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्॥ गोमूत्रेण॥ ३॥ ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करिषिणीम्। ईश्वरीं सर्वभूतानां तामिहोप ह्वये श्रियम्॥ इति गोमयोदकेन॥ ४॥ ॐ मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः। मा नो वीरान् रुद्र भामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे॥ इति भस्मोदकेन॥ ५॥ ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करिषिणीम्। ईश्वरीं सर्वभूतानां तामिहोप ह्वये श्रियम्॥ इति गन्धोदकेन॥ ६॥ ॐ नमः शंभवाय च मयो भवाय च नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च॥ ७॥ ॐ हꣳ०सः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्योम-सदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्॥ ८॥ ॐ या ते रुद्र शिवा तनूरघोराऽपापकाशिनी। तया नस्तन्वा शन्तमया गिरिशन्ताभि-चाकशीहि॥ ९॥ ॐ विष्णोर राटमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोऽसि वैष्णवमसि विष्णवे त्वा॥ १०॥ ॐ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः। स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः॥ ११॥ इत्यादि मन्त्रेण पृथक् पृथक् गन्धोदकेन संस्नाप्य—ॐ शतं वो अम्ब धामानि सहस्रमुत वो रुहः। अधा शतक्रत्वो यूयमिमं मे अगदं कृत॥ इति मन्त्रेण दूर्वाक्षतपुष्पैः सम्पूज्य—ॐ सुजातो ज्योतिषा सह शर्म वरूथमासदत्स्वः। वासो अग्ने विश्वरूपꣳ० संव्ययस्व विभावसो॥ इति मन्त्रेण वस्त्रेण धूमावतीदेवतामाच्छाद्यसुवर्णशलाकादिकं प्रतिमाघटकाय दद्यात्—इदं

सहिरण्यं गोनिष्क्रयद्रव्यमाचार्याय तुभ्यमहं सम्प्रददे। इति च आचार्याय दद्यात्। इति द्वितीयवेदिस्नपनम्॥

अथ गुरोरुत्तरवेद्यां पूर्ववद् धूमावतीदेवीं स्नापयित्वा आद्यपङ्क्तिस्थाद्यकलशेन—ॐ समुद्राय त्वा वाताय स्वाहा सरिराय त्वा वाताय स्वाहा। अनाधृष्याय त्वा वाताय स्वाहा प्रतिधृष्याय त्वा वाताय स्वाहा। अवस्यवे त्वा वाताय स्वाहाऽशिमिदाय त्वा वाताय स्वाहा। इति मन्त्रेण संस्नाप्य—ॐ शतं वो अम्ब धामानि सहस्त्रमुत वो रुहः। अधा शतक्रत्वो यूयमिमं मे अगदं कृत॥ इति दूर्वाक्षतान्मूर्ध्नि दत्त्वा धूमावतीं प्रार्थयेत्—

घूर्णघूर्णकरा घोरा घूर्णिताक्षी घनस्वना।
घातिनी घातकानां या धूमावतीं भजामि ताम्॥ १॥
चर्वन्तीमस्थिखण्डानां चण्ड-मुण्डविदारिणीम्।
चण्डाट्टहासिनीं देवीं भजे धूमावतीमहम्॥ २॥
छिन्नग्रीवां क्षताच्छन्नां छिन्नमस्तस्वरूपिणीम्।
छेदिनीं दुष्टसङ्घानां भजे धूमावतीमहम्॥ ३॥
जाता या याचिता देवैरसुराणां विघातिनी।
जल्पन्ती बहु गर्जन्ती भजे तां धूम्ररूपिणीम्॥ ४॥

ततो धूमावतीदेव्या दक्षिणहस्ते प्रतिमावितस्तिमात्रमूर्णासूत्रं इति मन्त्रेण बध्नीयात्—ॐ यदाबध्नन्दाक्षायणा हिरण्यठं० शतानीकाय सुमनस्यमानाः। तन्म आबध्नामि शतशारदायायुष्मान्जरदष्टिर्यथासम्॥ ततः प्रार्थयेत्—

बलिपूज्यां बलाराध्यां बगलारूपिणीं वराम्।
ब्रह्मादिवंदिताम् विद्यां वन्दे धूमावतीमहम्॥

ततोऽवशिष्टैः चतुर्भिः शुद्धोदककलशैः स्नपयेदेभिर्मन्त्रैराद्यङ्क्तिस्थैः—ॐ इदमापः प्रवहतावद्यं च मलं च यत्।

यच्चाभिदुद्रोहानृतं यच्च शेपे अभीरुणम्। आपो मा तस्मादेनसः पवमानश्च मुञ्चतु॥ इति शुद्धोदकेन॥ १॥ ॐ आपो देवीः प्रतिगृभ्णीत भस्मैतत्स्योने कृणुध्वठं० सुरभा उ लोके। तस्मै नमन्तां जनयः सुपत्नीर्मातेव पुत्रं बिभृताप्स्वेनत्॥ इति शुद्धोदकेन॥ २॥ ॐ इमं मे वरुण श्रुधी हवमद्या च मृडय। त्वामवस्युराचके॥ इति शुद्धोदकेन॥ ३॥ ॐ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुशठं०स मा न आयुः प्रमोषीः॥ इति शुद्धोदकेन॥ ४॥ इति क्रमेण स्नायात्।

ततो द्वितीयपङ्क्तिस्थविंशतिकलशैः क्रमेण—ॐ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपाठं० रेताठं०सि जिन्वति॥ इति मृत्तिकाकलशेन॥ १॥ ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भ-सर्जनी स्थो वरुणस्य ऋतसदन्यसि वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद॥ इति शुद्धोदकेन॥ २॥ ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्॥ इति गोमयेन॥ ३॥ ॐ देवीरापो अपां नपाद्यो व ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमः। तं देवेभ्यो देवत्रा दत्त शुक्रपेभ्यो येषां भाग स्थ स्वाहा॥ इति शुद्धोदकेन॥ ४॥ ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्॥ इति गोमूत्रेण॥ ५॥ ॐ आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसे॥ इति शुद्धोदकेन॥ ६॥ ॐ प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने। सठं०सृज्य मातृभिष्टं ज्योतिष्मान्पुनरासदः॥ इति भस्मोदकेन॥ ७॥ ॐ शं नो देवीरभिष्टय आपो भवन्तु पीतये। शं योरभिस्त्रवन्तुः नः॥ इति शुद्धोदकेन॥ ८॥ ॐ पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयो धाः। पयस्वतीः प्रदिशः सन्तु मह्यम्॥ इति पञ्चगव्येन॥ ९॥ ॐ यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः॥ इति शुद्धोदकेन॥ १०॥ ॐ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्। भवा वाजस्य संगथे॥

इति क्षीरजलेन॥ ११ ॥ ॐ तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः॥ इति शुद्धोदकेन॥ १२॥ ॐ दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः। सुरभि नो मुखा करत्प्र ण आयूर्ठ०षि तारिषत्॥ इति दधिजलेन॥ १३॥ ॐ युञ्जानः प्रथमं मनस्तत्वाय सविता धियः। अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरत्॥ इति शुद्धोदकेन॥ १४॥ ॐ घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा। द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरिरेतसा॥ इति घृतेन॥ १५॥ ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। सरस्वत्यै वाचो यन्तुर्यन्त्रिये दधामि बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चाम्यसौ॥ इति शुद्धोदकेन॥ १६॥ ॐ मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः। मधु नक्तमुतोषसो मधुमत्पार्थिवर्ठ०रजः। मधु द्यौरस्तु नः पिता। मधुमान्नो वनस्पति-र्मधुमाँऽअस्तु सूर्यः। माध्वीर्गावो भवन्तु नः॥ इति मधुना॥ १७॥ ॐ आपो अस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु। विश्वर्ठ०हि रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरा पूत एमि॥ इति शुद्धोदकेन॥ १८॥ ॐ आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः। पितरं च प्रयन्त्स्वः॥ इति शर्करया॥ १९॥ ॐ आपो ह यद्बृहतीर्विश्वमायन्गर्भं दधाना जनयन्ती-रग्निम्। ततो देवानार्ठ० समवर्ततासुरेकः कस्मै देवाय हविषा विधेम॥ इति शुद्धोदकेन॥ २०॥ पुनः निम्न मन्त्रेण वस्त्रेण संमार्ज्य तेनैव सुगन्धितैलेनाभ्यज्य—ॐ यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे। प्र प्र वयममृतं जातवेदसं प्रियं मित्रं न शर्ठ०सिषम्॥ ततः—ॐ द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव। पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः॥ इति मन्त्रेण यवशालिगोधूममसूरिकाद्यामलकचूर्णैरुद्धर्त्य ततः—ॐ या ते रुद्र शिवा तनूरघोराऽपापकाशिनी। तया नस्तन्वा शन्तमया गिरिशन्ताभिचाक-शीहि॥ इति मन्त्रेण यक्ष्मकर्दमेनजटा-मास्यानुनिम्पेत्—ततस्तृतीयपङ्क्तिस्थकलशद्वयेन—ॐ मा नस्तोके

तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः। मा नो वीरान् रुद्र भामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे॥ १॥ ॐ प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः। यस्योरुषु त्रिषु विक्रमणेश्वधिक्षियन्ति भुवनानि विश्वा॥ २॥ इति मन्त्र द्वयेन क्रमेण स्नपयेत्।

चतुर्थपङ्क्तिस्थैः षड्भिः क्रमेण—ॐ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्। भवा वाजस्य संगथे॥ इति पञ्चामृतेन॥ १॥ ॐ उरुर्ठ०हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ। अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित्। नमो वरुणायाधिष्ठितो वरुणस्य पाशः॥ २॥ ॐ सं ते पयार्ठ०सि समु यन्तु वाजाः सं वृष्ण्या न्यभितातिषाहः। आप्यायमानो अमृताय सोम दिवि श्रवार्ठ० स्युत्तमानिधिष्व॥ इति शुद्धोदकेन॥ ३॥ ॐ आप्यायस्व मदिन्तम सोम विश्वेभिरर्ठ० शुभिः। भवा नः सप्रथस्तमः सखा वृधे॥ इति शुद्धोदकेन॥ ४॥ ॐ अप्स्वग्ने सधिष्टव सौषधीरनु रुध्यसे। गर्भे सन् जायसे पुनः॥ इति शुद्धोदकेन॥ ५॥ ॐ अपार्ठ० रसमुद्वयसर्ठ०सूर्ये सन्तर्ठ० समाहितम्। अपार्ठ० रसस्य यो रसस्तं वो गृह्णाम्युत्तममुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम्॥ इति शुद्धोदकेन॥ ६॥ अथ पञ्चमपङ्क्तिस्थैश्चतुर्दशभिः क्रमेण—ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करिषिणीम्। ईश्वरीं सर्वभूतानां तामिहोप ह्वये श्रियम्॥ इति गन्धोदकेन॥ १॥ ॐ यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे। प्र प्र वयममृतं जातवेदसं प्रियं मित्रं न शर्ठ०सिषम्॥ इति कषायोदकेन॥ २॥ ॐ या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा। मनैनु बभ्रूणामहर्ठ०शतं धामानि सप्त च॥ इति सर्वौषधिजलेन॥ ३॥ ॐ ओषधीः प्रतिमोदध्वं पुष्पवतीः प्रसूवरीः। अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः॥ इति पुष्पोदकेन॥ ४॥ ॐ द्यौः शान्तिरन्तरिक्षर्ठ० शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः। वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्वर्ठ० शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि॥

इति शान्त्युदकेन॥ ५॥ ॐ याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः। बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वर्ठ०हसः॥ इति फलोद-केन॥ ६॥ ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥ इति सुवर्णोदकेन॥ ७॥ ॐ हविष्मतीरिमा आपो हविष्माँ२ आ विवासति। हविष्मान्देवो अध्वरो हविष्माँ२॥ अस्तु सूर्यः॥ इति गोशृङ्गोदकेन॥ ८॥ ॐ धान्यमसि धिनुहि देवान्प्राणाय त्वोदानाय त्वा व्यानाय त्वा। दीर्घामनु प्रसितिमायुषे धां देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिनाचक्षुषे त्वामहीनां पयोऽसि॥ इति सप्तधान्योदकेन॥ ९॥ ॐ अग्ने सहस्व पृतना अभिमातीरपास्य। दुष्टरस्तरन्नरातीर्वर्चोधा यज्ञ वाहसि॥ इति सहस्रच्छिद्रकलशेन॥ १०॥ ॐ या ओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु। बृहस्पतिप्रसूता अस्यै संदत्त वीर्यम्॥ इति पुनः सर्वौषधिकलशेन॥ ११॥ ॐ नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु। ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः॥ इति पञ्चपल्लवोदकेन॥ १२॥ ॐ अष्टौ व्यख्यत्ककुभः पृथिव्यास्त्रीधन्व योजना सप्त सिन्धून्। हिरण्याक्षः सविता देव आगाद्दधद्रत्ना दाशुषे वार्याणि॥ इति नवरत्नोदकेन॥ १३॥ ॐ इमं मे वरुण श्रुधी हवमद्या च मृडय। त्वामस्युराचके॥ इति तीर्थोदकजलेन॥ १४॥

तीर्थोदकजलेन चतुर्दश वेदिपरितो अष्टभिः समुद्रसंज्ञिवः क्रमेणतत्र—ॐ कया नश्चित्र आभुवदूती सदावृधः सखा। कया शचिष्ठयाऽवृता॥ इति क्षारोदधिकलशेन॥ १॥ ॐ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्। भवा वाजस्य संगथे॥ इति क्षीरोदधिकलशेन॥ २॥ ॐ दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः। सुरभि नो मुखा करत्प्रण आयूर्ठ०षि तारिषत्॥ इति दध्युदधिकलशेन॥ ३॥ ॐ घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा। द्यावा पृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरिरेतसा॥ इति घृतोदधिकलशेन॥ ४॥ ॐ

पयः पृथिव्यां पयः ओषधीषु पयो दिव्यन्तरिक्षे पयो धाः। पयस्वतीः प्रदिशः सन्तु मह्यम्॥ इति इक्षुरसोदकेन॥५॥ ॐ देवं बर्हिर्वारितीनामध्वरे स्तीर्णमश्विभ्यामूर्णम्रदाः सरस्वत्या स्योनमिन्द्र ते सदः। ईशायै मन्युठं० राजानं बर्हिषा दधुरिन्द्रियं वसुवने वसुधेयस्य व्यन्तु यज॥ इति सुरोदधिकलशेन॥६॥ ॐ स्वादिष्ठया मदिष्ठया पवस्व सोम धारया। इन्द्राय पातवे सुतः॥ इति स्वादूदधिकलशस्थितजलेन॥७॥ ॐ सरस्वती योन्यां गर्भमन्तरश्विभ्यां पत्नी सुकृतं बिभर्ति। अपाठं० रसेन-वरुणो न साम्नेन्द्रठं० श्रियै जनयन्नप्सु राजा॥ इति गर्भोदधिजलेन॥८॥

अथ षष्ठपङ्क्तिस्थैर्दशभिः क्रमेण स्नापयेत्—ॐ त्रातारमिन्द्र-मवितारमिन्द्रठं० हवे हवे सुहवठं० शूरमिन्द्रम्। ह्वयामिशक्रं पुरुहूत-मिन्द्रठं० स्वस्ति नो मघवा धात्विन्द्रः॥ इति कदम्बजलेन॥१॥ ॐ त्वं नो अग्ने तव देव पायुभिर्मघोनो रक्ष तन्वश्च वन्द्य। त्राता तोकस्य तनये गवामस्यनिमेषठं० रक्षमाणस्तव व्रते॥ इति शाल्मलिजलेन॥२॥ ॐ यमाय त्वाङ्गिरस्वते पितृमते स्वाहा। स्वाहा घर्माय स्वाहा घर्मः पित्रे॥ इति जम्बूजलेन॥३॥ ॐ असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य। अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु॥ इति अशोकजलेन॥४॥ ॐ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुशठं० स मा न आयुः प्रमोषीः॥ इति प्लक्षजलेन॥५॥ ॐ आ नो नियुद्भिः शतिनीभिरध्वरठं० सहस्रिणीभिरुपयाहि यज्ञम्। वायो अस्मिन्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः॥ इति चूतजलेन॥६॥ ॐ वयठं० सोम व्रते तव मनस्तनूषु बिभ्रत। प्रजावन्तः सचेमहि॥ इति वटजलेन॥७॥ ॐ तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम्। पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्त्ये॥ इति बिल्वजलेन॥८॥ ॐ नमोऽस्तु सर्पेभ्यो ये के च पृथिवी मनु। ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः॥ इति नागवल्लीजलेन॥९॥ ॐ ब्रह्म जज्ञानं प्रथमं

पुरस्ताद्वि सीमतः सुरुचो वेन आवः। स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः॥ इति पलाशजलेन॥ १०॥

अथ सप्तमपङ्क्तिस्थैश्चतुर्भिरेकेन वा—ॐ आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः। देवा नो यथा सदमिद्‌वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे॥ इत्यनुवाकेन।

तदुपरान्त सूक्ष्म वस्त्र से धूमावती देवी की मूर्ति को पोछकर आचार्य पुरुषसूक्त का उच्चारण करें। पुनः निम्न मंत्र का उच्चारण तीर्थोदक के द्वारा धूमावती देवी की मूर्ति को स्नान कराकर सुगन्धित श्वेत वस्त्र से पोंछे—ॐ विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात्। सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन्देव एकः। इति मन्त्रेण सकलीकृत्य देवीमावाहयेत्—

आवाहनम्—ॐ धूम्रा बभ्रुनीकाशा पितॄणार्ठ० सोमवतां बभ्रवो धूम्रनीकाशाः पितॄणां बर्हिषदां कृष्णा बभ्रुनीकाशाः पितॄणामग्निष्वा-त्तानां कृष्णाः पृषन्तस्त्रैयम्बकाः॥ अथवा ॐ धूम्रान्वसन्तायालभते श्वेतान् ग्रीष्माय कृष्णान्वर्षाभ्योऽरुणाञ्छरदे पृषतो हेमन्ताय पिशङ्गाञ्छिशिराय॥ ॐ धूमावत्यै नमः, आवाहनं समर्पयामि। आवाहनार्थे पुष्पं समर्पयामि।

आसनम्—ॐ पुरुष एवेदर्ठ० सर्वं यद्भूतं यच्च भाव्यम्। उतामृतत्वस्येशानो यदन्नेनातिरोहति॥ ॐ धूमावत्यै नमः, आसनं समर्पयामि।

पाद्यम्—ॐ एतावानस्य महिमातो ज्यायांश्च पूरुषः। पादो ऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि॥ ॐ धूमावत्यै नमः, पाद्यं समर्पयामि।

अर्घ्यम्—ॐ त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहा भवत्पुनः। ततो विष्वङ् व्यक्रामत्साशनानशने अभि॥ ॐ धूमावत्यै नमः, अर्घ्यं समर्पयामि।

स्नानम्—ॐ तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम्। पशूंस्तांश्चक्रे वायव्यानारण्या ग्राम्याश्च ये॥ ॐ धूमावत्यै नमः, स्नानीयं जलं समर्पयामि।

पञ्चामृतस्नानम्—ॐ पञ्च नद्यः सरस्वतीमपियन्ति सस्रोतसः। सरस्वती तु पञ्चधा सो देशेऽभवत्सरित्॥ ॐ धूमावत्यै नमः, पञ्चामृतस्नानं समर्पयामि। शुद्धोदकस्नानं समर्पयामि। आचमनीयं जलं समर्पयामि।

शुद्धोदकस्नानम्—ॐ शुद्धवालः सर्वशुद्धवालो मणिवालस्त ऽआश्विनाः। श्येतः श्येताक्षोऽरुणस्ते रुद्राय पशुपतये कर्णा यामा ऽअवलिप्ता रौद्रा नभोरूपाः पार्जन्याः॥ ॐ धूमावत्यै नमः, शुद्धोदकस्नानं समर्पयामि। शुद्धोदकस्नानान्ते आचमनीयं जलं समर्पयामि।

वस्त्रम्—ॐ तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे। छन्दाꣳसि जज्ञिरे तस्माद्यजुस्तस्मादजायत॥ ॐ धूमावत्यै नमः, वस्त्रद्वयं समर्पयामि। आचमनीयं जलं समर्पयामि।

यज्ञोपवीतम्—ॐ तस्मादश्वा अजायन्त ये के चोभयादतः। गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः॥ ॐ धूमावत्यै नमः, यज्ञोपवीतं समर्पयामि। यज्ञोपवीतान्ते आचमनीयं जलं समर्पयामि।

चन्दनम्—ॐ तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः। तेन देवा अयजन्त साध्या ऋषयश्च ये॥ ॐ धूमावत्यै नमः, चन्दनं समर्पयामि।

अक्षतान्—ॐ अक्षन्नमीमदन्त ह्यव प्रिया अधूषत। अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजान्विन्द्रते हरी॥ ॐ धूमावत्यै नमः, अक्षतान् समर्पयामि।

रक्तपुष्पमालाम्—ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुम्म इषाण सर्वलोकं म इषाण॥ ॐ धूमावत्यै नमः, रक्तपुष्पमालां समर्पयामि।

दूर्वाङ्कुरान्—ॐ काण्डात्काण्डात् प्ररोहन्ती परुषः परुषस्परि। एवा नो दूर्वे प्रतनु सहस्रेण शतेन च॥ ॐ धूमावत्यै नमः, दूर्वाङ्कुरान् समर्पयामि।

सुगन्धिद्रव्यम्—ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमाऽमृतात्॥ ॐ धूमावत्यै नमः, सुगन्धिद्रव्यं समर्पयामि।

धूपम्—ॐ धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान् धूर्वति तं धूर्व यं वयं धूर्वामः। देवानामसि वह्नितमर्ठ० सस्नितमं पप्रितमं जुष्टतमं देवहूतमम्॥ ॐ धूमावत्यै नमः, धूपमाघ्रापयामि।

दीपम्—ॐ चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत। श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत॥ ॐ धूमावत्यै नमः, दीपं दर्शयामि। (हस्तप्रक्षालनम्)

नैवेद्यम्—ॐ नाभ्या आसीदन्तरिक्षर्ठ० शीर्ष्णो द्यौः समवर्त्तत। पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ२॥ अकल्पयन्॥ ॐ धूमावत्यै नमः, नैवेद्यं निवेदयामि। मध्ये आचमनीयं जलं समर्पयामि। उत्तरापोशनार्थे पुनर्नैवेद्य निवेदयामि। हस्तप्रक्षालनार्थे मुखप्रक्षालनार्थे च जलं समर्पयामि। पुनराचमनीयं जलं समर्पयामि।

ताम्बूलम्—ॐ उत स्मास्य द्रवतस्तुरण्यतः पर्णं न वेरनुवाति प्रगर्धिनः। श्येनस्येव ध्रजतो अङ्कसं परि दधिक्राब्णः सहोर्जा तरित्रतः स्वाहा॥ ॐ धूमावत्यै नमः, मुखवासार्थं ताम्बूलं (पूगफल-एला-लवङ्गसहितम्) समर्पयामि।

दक्षिणाम्—ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम्॥ ॐ धूमावत्यै नमः, दक्षिणां समर्पयामि।

नीराजनम्—ॐ इदर्ठ० हविः प्रजननं मे अस्तु दशवीरर्ठ० सर्वगणर्ठ० स्वस्तये। आत्मसनि प्रजासनि पशुसनि लोकसन्यभयसनि।

**अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धत्त ॥ ॐ धूमावत्यै नमः, नीराजनं समर्पयामि।**

मन्त्रपुष्पाञ्जलिम्—**ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥ ॐ धूमावत्यै नमः, मन्त्रपुष्पाजलिं समर्पयामि।**

प्रदक्षिणाम्—**ॐ ये तीर्थानि प्रचरन्ति सृकाहस्ता निषङ्गिणः। तेषाᳫं सहस्रयोजनेऽव धन्वानि तन्मसि॥ ॐ धूमावत्यै नमः, प्रदक्षिणां समर्पयामि।** इस प्रकार से पूजा समाप्त करवाके यजमान से स्नान वस्त्र, नैवेद्यादि व सभी वस्तुएँ आचार्य शिल्पी को प्रदान करवाके रथयात्रा कर्म करावें।

## शय्यायामर्चाधिवासः

आचार्य और ब्राह्मण स्नान मण्डप में स्थित धूमावती देवी की प्रार्थना निम्न पुरुषसूक्त के सोलह मन्त्रों का उच्चारण करके यजमान से करावें—

**ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।**
**स भूमिᳫं सर्वत स्पृत्वात्यतिष्ठद्दशाङ्गुलम्॥**
**पुरुष एवेदᳫं सर्वं यद्भूतं यच्च भाव्यम्।**
**उतामृतत्वस्येशानो यदन्नेनातिरोहति॥**
**एतावानस्य महिमातो ज्यायांश्च पूरुषः।**
**पादो ऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि॥**
**त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः।**
**ततो विष्वङ् व्यक्रामत्साशनानशने अभि॥**
**ततो विराडजायत विराजो अधि पूरुषः।**
**स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः॥**
**तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम्।**
**पशूंस्तांश्चक्रे वायव्यानारण्या ग्राम्याश्च ये॥**

तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे।
छन्दार्ठ०सि जज्ञिरे तस्माद्यजुस्तस्मादजायत॥
तस्मादश्वा अजायन्त ये के चोभयादतः।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः॥
तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः।
तेन देवा अयजन्त साध्या ऋषयश्च ये॥
यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्।
मुखं किमस्यासीत्किं बाहू किमूरू पादा उच्येते॥
ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्यार्ठ० शूद्रोऽ अजायत॥
चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत॥
नाभ्या आसीदन्तरिक्षर्ठ० शीर्ष्णो द्यौः समवर्तत।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ २॥ अकल्पयन्॥
यत्पुरुषेण हविषा देवा यज्ञमतन्वत।
वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः॥
सप्तास्यासन्परिधयस्त्रिःसप्त समिधः कृताः।
देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम्॥
यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन्।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥

प्रार्थना के पश्चात् आचार्य धूमावती देवी को निद्रा से जगाने के लिए निम्न श्लोक का उच्चारण करें—

ॐ उत्तिष्ठोत्तिष्ठ भो! देवि! त्यज निद्रां जगन्मयि।
त्वयि सुप्ते जगत्सुप्तमुत्थिते चोत्थितं जगत्॥

इन दो मन्त्रों से धूमावती की मूर्ति को उठावें—ॐ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे। उप प्रयन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा॥ १॥ आमूरज प्रत्यावर्तयेमाः केतुमद्दुन्दुभिर्वावदीति। समश्वपर्णाश्चरन्ति नो नरोऽस्माकमिन्द्र रथिनो जयन्तु॥ २॥ इस मन्त्र से धूमावती की मूर्ति को रथ के ऊपर रखें—ॐ रथे तिष्ठन्नयति वाजिनः पुरो यत्र यत्र कामयते सुषारथिः। अभीशूनां महिमानं पनायत मनः पश्चादनुयच्छन्ति रश्मयः॥

ॐ आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः।
देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवे दिवे॥ १ ॥
देवानां भद्रा सुमतिर्ऋजूयतां देवानाꣳ रातिरभि नो निवर्तताम्।
देवानाꣳ सख्यमुपसेदिमा वयं देवा न आयुः प्रतिरन्तु जीवसे॥ २ ॥
तान्पूर्वया निविदा हूमहे वयं भगं मित्रमदितिन्दक्षमस्त्रिधम्।
अर्यमणं वरुणꣳ सोममश्विना सरस्वती नः सुभगा मयस्करत्॥ ३ ॥
तन्नो वातो मयो भुव्वातु भेषजन्तन्माता पृथिवी तत्पिता द्यौः।
तद्ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणु तन्धिष्ण्या युवम्॥ ४ ॥
तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम्।
पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये॥ ५ ॥
स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥ ६ ॥
पृषदश्वा मरुतः पृश्निमातरः शुभं यावानो विदथे षु जग्मयः।
अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसागमन्निह॥ ७ ॥
भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः।
स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि देवहितं यदायुः॥ ८ ॥
शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम्।
पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः॥ ९ ॥
अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः।
विश्वे देवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्॥ १०॥

द्यौः शान्तिरन्तरिक्षर्ठ० शान्तिः पृथिवी
शान्तिरापः शान्तिरोषधयः शान्तिः।
वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः
सर्वर्ठ० शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥ ११ ॥
यतो यतः समीहसे ततो नो अभयं कुरु।
शं नः कुरु प्रजाभ्योऽभयं नः पशुभ्यः ॥ १२ ॥

इति सूक्तेन मङ्गलतूर्यघोषेण च सह मण्डप-प्रासादग्रामप्रादक्षिण्येन आनीय प्रतिष्ठामण्डपपश्चिमद्वारे रथादवतार्य तेनैव द्वारेण—ॐ आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च। हिरण्ययेन सविता रथेनादेवो याति भुवनानि पश्यन्॥ इति मन्त्रेण मध्ये प्रवेश्य वेद्याः पश्चिमभागे सर्वतोभद्रपीठे प्राङ्मुख धूमावतीदेवीमुपवेश्य स्वयमुदङ्मुखः यजमानः स्वशाखोक्तवधिना मधुपर्कं कुर्यात्। कमलाकरस्तु—ॐ अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः। प्रप्र दातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे॥

सङ्कल्पः—देशकालौ स्मृत्वा, धूमावतीप्रतिष्ठाकर्मणि अर्चाधिवासनं करिष्ये। इति सङ्कल्प्य वेद्यां कुशानास्तीर्य तदुपरि प्राक्शिरस्कां याम्यशिरस्कां वा शय्यायां स्थाप्य धूमावतीलिङ्गकमन्त्रेण निदध्यात्।

ततः स्थाप्यधूमावतीलिङ्गकमन्त्रेण शय्यायां धूमावतीदेवीं निवेश्य स्वापयित्वा त्रिभिर्वस्त्रैर्देवीमाच्छाद्य देव्याः शिरोदेशे भूमौ खण्डखाद्ययुतं सहिरण्यं निद्राकलशं—ॐ आपो देवीः प्रतिगृभ्णीत भस्मैतत्स्योने कृणुध्वर्ठ० सुरभा उ लोके। तस्मै नमन्तां जनयः सुपत्नीर्मातेव पुत्रं बिभृताप्स्वेनत्॥ इति मन्त्रेण प्रतिष्ठाप्य—ॐ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्। भवा वाजस्य संगथे॥ इति मन्त्रेण मधुसर्पिर्भ्यां धूमावतीमभ्यर्च्य—ॐ या ते रुद्र शिवा तनूरघोराऽपापकाशिनी। तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि॥ इति मन्त्रेण तैलसर्षपकल्कै

रुपलिप्य गन्धादिना तत्तद् धूमावतीं पञ्चोपचारैरभ्यर्च्य—ॐ बृहस्पते परिदीया रथेन रक्षोहामित्राँअपबाधमानः। प्रभञ्जन्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम्॥ इति मन्त्रेण परिसरं दद्यात्। ॐ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्। सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन्देव एकः॥ इति मन्त्रेण धूमावतीदेव्याः पाद—नाभि—वक्षः—शिरांसि आलम्भेत्। प्रत्यालम्भनं मन्त्रावृत्तिः। ॐ बृहस्पते परिदीया रथेन रक्षोहामित्राँअपबाधमानः। प्रभञ्जन्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम्॥ इति मन्त्रेण दक्षिणपार्श्वे छत्रम्। ॐ वातो वा मनो वा गन्धर्वाः सप्तविर्ठ०शतिः। अग्रेऽश्वमयुञ्जस्ते अस्मिञ्जवमादधुः॥इति मन्त्रेण वामपार्श्वे व्यञ्जनं चामरं च। ॐ त्रिणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः। अतो धर्माणि धारयन्॥ इति मन्त्रेण चरणदेशे पादुके। ॐ आजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः। पुनरूर्जा निवर्तस्व सा नः सहस्त्रं धुक्ष्वोरुधारा पयस्वती पुनर्माविशताद्रयिः॥ इति मन्त्रेण पार्श्वयोः शान्तिकुम्भौ। ॐ अभि त्वा शूर नोनुमोऽदुग्धाः इव धेनवः। ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः॥ इति मन्त्रेण धूमावतीदेवस्य पुरतः भाजन–आसन–दर्पण–घण्टा–भक्ष्य–भोजान्नपयो–दधि–मधु–घृतादिकं गृहोपस्करजातं जलपात्रं भोजनपात्रं–वस्त्रभूषणादिकं–ताम्बूल-सामग्रीञ्च परिकल्पयेत्।

सङ्कल्पः—देशकालौ संकीर्त्य, धूमावतीदेव्यर्चाधिवासनाङ्गभूत-मिन्द्रादिदशलोकपालेभ्यः भूतेभ्यश्च बलिदानमहङ्करिष्ये। इति सङ्कल्प्य प्रतिष्ठामण्डपाद्बहिर्गत्वा—ॐ त्रातारमिन्द्रमवितारमिन्द्रर्ठ० हवे हवे सुहवर्ठ० शूरमिद्रम्। ह्वयामि शक्रं पुरुहूतमिन्द्रर्ठ० स्वस्तिनो मघवा धात्विन्द्रः॥ १॥ त्वं नो अग्ने तव देव पायुभिर्मघोनो रक्ष तन्वश्च वन्द्य। त्राता तोकस्य तनये गवामस्य निमेषर्ठ० रक्षमाणस्तव व्रते॥ २॥ यमाय त्वाङ्गिरस्वते पितृमते स्वाहा। घर्माय स्वाहा घर्मः पित्रे॥ ३॥

असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य। अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु॥ ४॥ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुशर्ठ० स मा न आयुः प्रमोषी॥ ५॥ आ नो नियुद्भिः शतिनीभिरध्वरर्ठ० सहस्त्रिणीभिरुपयाहि यज्ञम्। वायो अस्मिन्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः॥ ६॥ वयर्ठ० सोम व्रते तव मनस्तनूषु बिभ्रतः। प्रजावन्तः सचेमहि॥ ७॥ तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम्। पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्त्ये॥ ८॥ अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः। यः शर्ठ०सते स्तुवते धायि पज्र इन्द्र ज्येष्ठा अस्माँ२॥ अवन्तु देवाः॥ ९॥ स्योना पृथिवी नो भवानृक्षरा निवेशनि। यच्छा नः शर्म सप्रथाः॥ १०॥ इत्यादि दशमन्त्रैः गन्धादिभिः पञ्चोपचारैरिन्द्रादीन् सम्पूज्य तत्तन्मन्त्रेण माषभक्तबलीन्दद्यात्। पुनः प्रतिदिक्षु दशसु—ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। ऊर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्॥ इति मन्त्रान्ते 'ॐ भूतेभ्यो बलिरयमुपतिष्ठतु' इत्युक्त्वा सर्वभूतेभ्यो बलिं दद्यात्। पुनः आचमनं कुर्यात्। तद्यथा—ॐ नमः पूर्वादिग्वासिभ्योदिक्पति–दिग्भूताधिपति–दिग्गणपति-दिग्-रुद्र-दिङ्मातृ-दिक्क्षेत्रपालेभ्यो नमः। एवं प्रतिदिशं बलिं दत्त्वाऽऽचामेत्। तत आचार्यः—ॐ पराय धूमावत्यात्मने स्वाहा।

आचार्य धूमावती देवी के लिए एक हजार आठ अथवा एक सौ आठ या अट्ठाइस अथवा आठ बार तिल या यव द्वारा यजमान से कुण्ड में हवन करावें।

---

## धूमावतीप्रतिष्ठायां विहितन्यासाः

यजमान वेदी पर पूर्वाभिमुख धूमावतीदेवी की मूर्ति के सामने बैठकर निम्न संकल्प करे—

संकल्पः—देशकालौ सङ्कीर्त्य, अमुकगोत्रोऽमुकशर्माहम् (वर्माऽहम्, गुप्तोऽहम्, दासोऽहम्) अस्मिन् धूमावतीदेव्यर्चाधिवासन-कर्मणि देविकलासान्निध्यर्थं प्रणवादिन्यासान् करिष्ये।

यजमान अपने दायें हाथ में लाल पुष्प लेकर निम्न क्रम से न्यास कार्य करे—

### प्रणवन्यासः

१. ॐ अं नमः पादयोर्न्यसामि। २. ॐ उं नमः हृदये न्यसामि। ३. ॐ मं नमः ललाटे न्यसामि।

### व्याहृतिन्यासः

१. ॐ भूः नमः पादयोः न्यसामि। २. ॐ भुवः नमः हृदये न्यसामि। ३. ॐ स्वः नमः ललाटे न्यसामि।

### मातृकान्यासः

१. ॐ अं नमः शिरसि न्यसामि २. ॐ आं नमः मुखे न्यसामि ३. ॐ इं नम : दक्षिणनेत्रे न्यसामि। ४. ॐ ईं नमः वामनेत्रे न्यसामि ५. ॐ उं नमः दक्षिणश्रवणे न्यसामि ६. ॐ ऊं नमः वामश्रवणे न्यसामि ७. ॐ ऋं नमः दक्षिणगण्डे न्यसामि ८. ॐ ॠं वामगण्डे न्यसामि ९. ॐ लृं नमः दक्षिणनासापुटे न्यसामि १०. ॐ लॄं नमः वामनासापुटे न्यसामि ११. ॐ एं नमः ऊर्ध्वदंशनेषु न्यसामि १२. ॐ ऐं अधोदंशनेषु न्यसामि १३. ॐ नमः ऊर्ध्वोष्ठे न्यसामि १४. औं नमः अधोरोष्ठे न्यसामि १५. ॐ अं नमः ललाटे न्यसामि १६. ॐ अः नमः जिह्वायां न्यसामि १७. ॐ यं

नमः त्वचि न्यसामि १८. ॐ रं नमः चक्षुषोर्न्यसामि १९. ॐ लं नमः नासिकायां न्यसामि २०. ॐ वं नमः दशनेषु न्यसामि २१. ॐ शं नमः श्रोत्रयोर्न्यसामि २२. ॐ षं नमः उदरे न्यसामि २३. ॐ सं नमः कटिदेशे न्यसामि २४. ॐ हं नमः हृदये न्यसामि २५. ॐ क्षं नमः नाभौ न्यसामि २६. ॐ लं लिङ्गे न्यसामि २७. ॐ पं फं बं भं मं दक्षिणबाहौ न्यसामि २८. ॐ तं थं दं धं नं वामबाहौ न्यसामि २९. ॐ टं ठं डं ढं णं दक्षिणजङ्घायां न्यसामि ३०. ॐ चं छं जं झं ञं वामजङ्घाया न्यामि ३१. ॐ कं खं गं घं ङं सर्वाङ्गुलिषु न्यसामि।

## ऋक्षन्यासः

१. ॐ रविचन्द्राभ्यां नमः नेत्र न्यसामि २. ॐ भौमाय नमः हृदये न्यसामि ३. ॐ बुधाय नमः स्कन्धे न्यसामि ४. ॐ बृहस्पतये नमः जिह्वायां न्यसामि ५. ॐ शुक्राय नमः लिङ्गे न्यसामि ६. ॐ शनैश्चराय नमः ललाटे न्यसामि ७. ॐ राहवे नमः पादयो न्यसामि ८. ॐ केतुभ्यो नमः केशेषु न्यसमि ९. ॐ रोहिणोभ्यो नमः हृदये न्यसामि १०. ॐ मृगशिरसे नमः शिरसि न्यसामि ११. ॐ आर्द्रायै नमः केशेषु न्यसामि १२. पुनर्वसुभ्यां नमः ललाटे न्यसामि १३. ॐ पुष्याय नमः मुखे न्यसामि १४. ॐ आश्लेषाभ्यो नमः नासिकायां न्यसामि १५. ॐ मघाभ्यो नमः दन्तेषु न्यसामि १६. ॐ पूर्वाफाल्गुनोभ्यो नमः दक्षिणश्रवणे न्यसामि १७. ॐ उत्तराफाल्गुनीभ्यो नमः वामश्रवणे न्यसामि १८. ॐ हस्ताय नमः हस्तयो न्यसामि १९. ॐ चित्रायै नमः दक्षिणभुजे न्यसामि २०. ॐ स्वात्यै नमः वामभुजे न्यसामि २१. ॐ विशाखाभ्यां नमः हृदि न्यसामि २२. ॐ अनुराधाभ्यो नमः स्तनयो न्यसामि २३. जेष्ठाभ्यो नमः दक्षिण-कुक्षौ न्यसामि २४. ॐ मूलाय नमः वामकुक्षौ न्यसामि २५. ॐ पूर्वा-षाढाभ्यो नमः कटिपार्श्व न्यसामि २६. ॐ उत्तराषाढाभ्यो नमः लिङ्गे न्यसामि २७. ॐ श्रवणधनिष्ठाभ्यो नमः वृषणयो न्यसामि २८. ॐ शत-

भिषाभ्यो नमः नेत्रे न्यसामि २९. ॐ पूर्वाभाद्रपदाभ्यो नमः दक्षिणोरौ न्यसामि ३०. ॐ उत्तराभाद्रपदाभ्यो नमः वामोरौ न्यसामि ३१. ॐ रेवतीभ्यो दक्षिणजङ्घाया न्यसामि ३२. ॐ अश्विनीभ्यां नमः वामजङ्घाया न्यसामि ३३. ॐ भरणीभ्यो नमः दक्षिणपादे न्यसामि ३४. ॐ कृत्तिकाभ्यो नमः वामपादे न्यसामि ३५. ॐ ध्रुवाय नमः नाभ्यां न्यसामि ३६. ॐ सप्तर्षिभ्यो नमः कण्ठे न्यसामि ३७. ॐ मातृमण्डलाय नमः कटिदेशे न्यसामि ३८. ॐ विष्णुपदेभ्यो नमः पादयो न्यसामि ३९. ॐ नागवीथ्यै नमः, ॐ अङ्गवीथ्यै नमः, वनमालादेशे न्यसामि ४०. ॐ ताराभ्यो नमः रोमकूपेषू न्यसामि ४१. ॐ अगस्त्याय नमः कौस्तुभदेशे न्यसामि।

## कालन्यासः

१. ॐ चैत्राय नमः शिरसि न्यसामि २. ॐ वैशाखाय नमः मुखे न्यसामि ३. ॐ ज्येष्ठाय नमः हृदये न्यसामि ४. ॐ आषाढाय नमः दक्षिणस्तने न्यसामि ५. ॐ श्रवणाय नमः वामस्तने न्यसामि ६. ॐ भाद्रपदाय नमः उदरे न्यसमि ७. ॐ आश्विनाय नमः कट्यां न्यसामि ८. ॐ कार्तिकाय नमः दक्षिणोरौ न्यसामि ९. ॐ मार्गशीर्षाय नमः वामोरौ न्यसामि १०. ॐ पौषाय नमः दक्षिणजङ्घायां न्यसामि ११. ॐ माघाय नमः वामजङ्घायां न्यसामि १२. ॐ फाल्गुनाय नमः पादयो न्यसामि १३. ॐ सम्वत्सराय नमः दक्षिणोर्ध्वबाहौ न्यसामि १४. ॐ परिवत्वसराय नमः दक्षिणाधोबाहौ न्यसामि १५. ॐ इद्वत्सराय नमः वामोधोबाहौ न्यसामि १६. ॐ अनुवत्सराय नमः वामोर्ध्वबाहौ न्यसामि १७. ॐ पर्वतेभ्यो नमः सन्धिषु न्यसामि १८. ॐ ऋतुभ्यो नमः लिङ्गे न्यसामि १९. ॐ अहोरात्रेभ्यो नमः अस्थिुष न्यसामि २०. ॐ क्षणाय नमः, ॐ लवाय नमः, ॐ कामायै नमः, ॐ काष्ठायै नमः रोमसु न्यसामि २१. ॐ कृतयुगाय नमः मुखे न्यसमि २२. ॐ त्रेतायुगाय नमः हृदये न्यसामि २३. ॐ द्वापराय नमः नितम्बे नमः न्यसामि २४. ॐ

कलियुगाय नमः पादयो न्यसामि २५. ॐ चतुर्दशमन्वन्तरेभ्यो नमः बाह्वो न्यसामि २६. ॐ पराय नमः, ॐ परार्द्धाय नमः, ॐ जङ्घयो न्यसामि २७. ॐ महाकलपाय नमः शरीरे न्यसामि २८. ॐ उदगाय नमः ॐ दक्षिणायनाय नमः पादयो न्यसामि २९. ॐ विषुवद्भ्यो नमः सर्वाङ्गुलिषु न्यसामि।

## सर्वदेवसाधारणन्यासः

१. ॐ ब्राह्मणाय नमः मुखे न्यसामि २. ॐ क्षत्रियाय नमः बाह्वो न्यसामि ३. ॐ वैश्याय नमः ऊर्वो न्यसमि ४. ॐ शूद्राय नमः पादयो न्यसमि ५. शङ्करजेभ्यो नमः पादाग्रे न्यसामि ६. ॐ अनुलोमजेभ्यो नमः सर्वाङ्गसन्धिषु न्यसामि ७. ॐ गोभ्यो नमः मुखे न्यसामि ८. ॐ अजाभ्यो नमः, ॐ आविकाभ्यो नमः हस्तयो न्यसामि ९. ॐ ग्रामपशुभ्यो नमः, आरण्यपशुभ्यो नमः ऊर्वो न्यसामि।

## स्तोय न्यासः

१. ॐ मेघेभ्यो नमः केशेषु न्यसामि २. ॐ अभ्रेभ्यो नमः रोमसु न्यसामि ३. ॐ नदीभ्यो नमः सर्वगात्रेषु न्यसामि ४. ॐ समुद्रेभ्यो नमः कुक्षिदेशे न्यसामि।

## वेदन्यासः

१. ॐ ऋग्वेदाय नमः शिरसि न्यसामि २. ॐ यजुर्वेदाय नमः दक्षिणभुजे न्यसामि ३. ॐ सामवेदाय नमः वामभुजे न्यसामि ४. ॐ सर्वोपनिषद्भ्यो नमः हृदये न्यसामि ५. ॐ इतिहासपुराणेभ्यो नमः जङ्घयो न्यसामि ६. ॐ अर्थर्वाङ्गिरसेभ्यो नमः नाभौ न्यसामि ७. ॐ कल्पसूत्रेभ्यो नमः ॐ व्याकरणेभ्यो नमः वक्त्रे न्यसामि ८. ॐ तर्केभ्यो नमः कण्ठे न्यसामि ९. मीमांसायै नमः, ॐ निरुक्ताय नमः हृदये न्यसामि १०. ॐ छन्दःशास्त्रेभ्यो नमः, ॐ ज्योतिः शास्त्रेभ्यो नमः

नेत्रयोर्न्य न्यसामि ११. ॐ गीताशास्त्रेभ्यो नमः, ॐ भूतशास्त्रेभ्यो नमः श्रोत्रयोर्न्य न्यसामि १२. ॐ आयुर्वेदाय नमः दक्षिणभुजे न्यसामि १३. ॐ धननुर्वेदाय नमः वामभुजे न्यसामि १४. ॐ योगशास्त्रेभ्यो नमः हृदये न्यसामि १५. ॐ नीतिशास्त्रेभ्यो नमः पादयोर्न्य न्यसामि १६. ॐ वश्यतन्त्राय नमः ओष्ठयोर्न्य न्यसामि।

## वैराजन्यासः

१. ॐ दिवे नमः मूर्ध्नि न्यसामि २. ॐ सूर्यलोकाय नमः, चन्द्रालोकाय नमः नेत्रयोर्न्य न्यसामि ३. ॐ वायु लोकाय नमः घ्राणे न्यसामि ४. ॐ व्योम्ने नमः नाभौ न्यसामि ५. ॐ समुद्रेभ्यो नमः वस्तिदेशे न्यसामि ६. ॐ पृथिव्यै नमः पादयोर्न्य न्यसामि।

## मूर्तिन्यासः

१. ॐ हिरण्यगर्भाय नमः शिरसि न्यसामि २. ॐ कृष्णाय नमः केशेषु न्यसामि ३. ॐ रुद्राय नमः ललाटे न्यसामि ४. ॐ यमाय नमः भ्रुवो न्यसामि ५. ॐ अश्विभ्यां नमः कर्णयो न्यसामि ६. ॐ वैश्वानराय नमः मुखे न्यसामि ७. ॐ मरुद्भ्यो नमः घ्राणे न्यसामि ८. ॐ वसुभ्यो नमः कण्ठे न्यसामि ९. ॐ रुद्रेभ्यो नमः दन्तेषु न्यसामि १०. ॐ सरस्वत्यै नमः जिह्वायां न्यसामि ११. ॐ इन्द्राय नमः दक्षिणभुजे न्यसामि १२. ॐ वलये नमः वामभुजे न्यसामि १३. ॐ प्रह्लादाय नमः दक्षिणस्तने न्यसामि १४. ॐ विश्वकर्मणे नमः वामस्तने न्यसामि १५. ॐ नारदाय नमः दक्षिणकुक्षौ न्यसामि १६. ॐ अनन्तादिभ्यो वामकुक्षौ न्यसामि १७. ॐ वरुणाय नमः हस्तयो न्यसामि १८. ॐ मित्राय नमः पादयो न्यसामि १९. ॐ विश्वेभ्यो देवेभ्यो नमः ऊर्वो न्यसामि २०. ॐ पितृभ्यो नमः जान्वो न्यसामि २१. ॐ यक्षेभ्यो नमः जङ्घयो न्यसामि २२. ॐ राक्षसेभ्यो नमः गुल्फयो न्यसामि २३. ॐ

पिशाचेभ्यो नमः पादयो न्यसामि २४. ॐ असुरेभ्यो नमः पादाङ्गुलिषु न्यसामि २५. ॐ विद्याधरेभ्यो नमः पार्ष्ण्यो न्यसामि २६. ॐ ग्रहेभ्यो नमः पादतलयो न्यसामि २७. ॐ गुह्यकेभ्यो नमः गुह्ये न्यसामि २८. ॐ पूतनादिभ्यो नमः नखेषु न्यसामि २९. ॐ गन्धर्वेभ्यो नमः ओष्ठयो न्यसामि ३०. ॐ कार्तिकेताय नमः दक्षिणपार्श्वे न्यसामि ३१. ॐ गणेशाय नमः वामपार्श्वे न्यसामि ३२. ॐ मत्स्याय नमः मूर्ध्नि न्यसामि ३३. ॐ कूर्माय नमः पादयो न्यसामि ३४. ॐ नृसिंहाय नमः ललाटे न्यसामि ३५. ॐ वराहाय नमः जङ्घयो न्यसामि ३६. ॐ वामनाय नमः मुखे न्यसामि ३७. ॐ परशुरामाय नमः हृदये न्यसामि ३८. ॐ रामाय नमः वाहुषु न्यसामि ३९. ॐ कृष्णाय नमः नाभ्यां न्यसामि ४०. ॐ बुधाय नमः बुद्धौ न्यसामि ४१. ॐ कलङ्किने नमः जानुदेशे न्यसामि ४२. ॐ केशवाय नमः शिरसि न्यसामि ४३. ॐ नारायणाय नम : मुखे न्यसामि ४४. ॐ माधवाय नमः ग्रीवायां न्यसामि ४५. ॐ गोविन्दाय नमः बाह्वो न्यसामि ४६. ॐ विष्णावे नमः हृदये न्यसामि ४७. ॐ मधुसूदनाय नमः पृष्ठे न्यसामि ४८. ॐ त्रिविक्रमाय नमः कट्यट्यो न्यसामि ४९. ॐ वामाय नमः जठरे न्यसामि ५०. ॐ श्रीधराय नमः, ॐ हृषीकेशाय नमः जङ्घयो न्यसामि ५१. ॐ पद्मनाभाय नमः गुल्फयो न्यसामि ५२. ॐ दामोदराय नमः पादयो न्यसामि।

## क्रतुन्यासः

१. ॐ अश्वमेधाय नमः मूर्ध्नि न्यसामि २. ॐ नरमेघाय नमः ललाटे न्यसामि ३. ॐ राजसूयाय नमः मुखे न्यसामि ४. ॐ गोसवाय नमः कण्ठे न्यसामि ५. ॐ द्वादशाहाया नमः हृदि न्यसामि ६. ॐ अहीनेभ्यो नमः नाभौ न्यसामि ७. ॐ सर्वजिद्भ्यो नमः न्यसामि ८. ॐ सर्वजिद्भ्यो नमः दक्षिणकट्यां न्यसामि ९. ॐ सर्वमेघाय नमः वामकट्यां न्यसामि १०. ॐ अग्निष्टोमाय नमः लिङ्गे न्यसामि ११. ॐ

आप्तोर्यामाय नमः ऊर्वो न्यसामि १२. ॐ षोडशिने नमः जान्वो न्यसामि १३. ॐ उक्थ्याय नमः दक्षिणजङ्घाया न्यसामि १४. ॐ वाजपेयाय नमः वामजङ्घायां न्यसामि १५. ॐ अत्यग्निष्टोमाय नमः दक्षिबाहौ न्यसामि १६. ॐ चातुर्मास्याय नमः वामबाहौ न्यसामि १७. ॐ सौत्रामणये नमः हस्तेषु न्यसामि १८. ॐ पश्विष्टिभ्यो नमः अङ्गुलीषु न्यसामि १९. ॐ दर्शपूर्णमासाभ्यां नमः नेत्रयो न्यसामि २०. ॐ सर्वेष्टिभ्यो नमः रोमकूपेषु न्यसामि २१. ॐ स्वाहाकाराय नमः, ॐ वषट्काराय नमः स्तनयो न्यसामि २२. ॐ पञ्चमहायज्ञेभ्यो नमः पादाङ्गुलीषु न्यसामि २३. ॐ आहवनीयाय नमः मुखे न्यसामि २४. ॐ दक्षिणाग्नये नमः हृदये न्यसामि २५. ॐ गार्हपात्याय नमः नाभौ न्यसामि २६. ॐ वेद्यै नमः उदरे न्यसामि २७. ॐ प्रवर्ग्याय नमः भूषणे न्यसामि २८. ॐ सवनेभ्यो नमः पादयो न्यसामि २९. ॐ इध्मेभ्यो नमः बाहुषु न्यसामि ३०. ॐ दर्भेभ्यो नमः केशेषु न्यसामि।

## गुणन्यासः

१. ॐ धर्माय नमः मूर्ध्नि न्यसामि २. ॐ ज्ञानाय नमः हृदि न्यसामि ३. ॐ वैराग्याय नमः गुह्ये न्यसामि ४. ॐ ऐश्वर्याय नमः पादयो न्यसामि।

## धूमावत्यायुधन्यासः

१. ॐ वज्राय नमः शिरसि न्यसामि, २. ॐ शक्तये नमः मस्तके न्यसामि, ३. ॐ दण्डाय नमः दक्षिणभुजे न्यसामि, ४. ॐ खड्गाय नमः वामभुजे न्यसामि, ५. ॐ पाशाय नमः जठरपृष्ठदेशेषु न्यसामि, ६. ॐ अङ्कुशाय नमः लिङ्गे वृषणयोश्च न्यसामि, ७. ॐ गदायै नमः दक्षिणजान्वो न्यसामि, ८. ॐ शूलाय नमः वामजान्वोन्यसामि, ९. ॐ खेटाय नमः गुल्फयो न्यसामि, १०. ॐ चक्राय नमः जङ्घयो न्यसामि।

## धूमावतीशक्तिन्यासः

ॐ कामदायै नमः ललाटे न्यसामि ॥ १ ॥ ॐ मानदायै नमः मुखे न्यसामि ॥ २ ॥ ॐ नक्तायै नमः गुह्ये न्यसामि ॥ ३ ॥ ॐ मधुरायै नमः कण्ठे न्यसामि ॥ ४ ॥ ॐ मधुराननायै नमः दिक्षु न्यसामि ॥ ५ ॥ ॐ नर्मदायै नमः हृदि न्यसामि ॥ ६ ॥ ॐ भोगदायै नमः जठरे न्यसामि ॥ ७ ॥ ॐ नन्दायै नमः नेत्रे न्यसामि ॥ ८ ॥ ॐ प्राणदायै सर्वाङ्गे न्यसामि ॥ ९ ॥

विशिष्टन्यासाः

## मातृकान्यासः

विनियोगः—तत्र ओमस्य मातृकामन्त्रस्य ब्रह्मा ऋषिर्गायत्री छन्दो मातृकासरस्वतीदेवता हलो बीजानि स्वराश्शक्तयस्तदुभयङ्कीलक-मभीष्टसिद्ध्यर्थे विनियोगः ।

शिरसि ब्रह्मणे ऋषये नमः। मुखे गायत्रीछन्दसे नमः। हृदि मातृकासरस्वत्यै देवतायै नमः। लिङ्गे हल्भ्यो बीजेभ्यो नमः। पादयोस्स्वरेभ्यश्शक्तिभ्यो नमः सर्व्वाङ्गे तदुभयकीलकाय नमः ॥

## षडङ्गन्यासः

ॐ अँकँखँगँघँङँआँ हृदयाय नमः। इँचँछँजँझँञँईँ शिरसे स्वाहा। उँटँठँडँढँणँऊँ शिखायै वषट्। एँतँथँदँधँनँऐँ कवचाय हुम्। ओंपँफँबँभँमँऔँ नेत्रत्रयाय वौषट्, अँयँरँलँवँशँषँहँक्षँअः अस्त्राय फट् ॥

## करन्यासः

ॐ अँकँखँगँघँङँआँ अङ्गुष्ठाभ्यां नमः। इँचँछँजँझँञँईँ तर्जनीभ्यां स्वाहा। उँटँठँडँढँणँऊँ मध्यमाभ्यां वषट्। एँतँथँदँधँनँऐँ अनामिकाभ्यां हुम्। ओंपँफँबँभँमँऔँ कनिष्ठिकाभ्यां वौषट्। अँयँरँलँवँशँषँसँहँक्षँअः करतलकरपृष्ठाभ्यां फट् ॥

## बहिर्म्मातृकान्यासः

ॐ ललाटे अँ नमः। मुखवृत्ते आँ नमः। दक्षनेत्रे इं नमः। वामनेत्रे ईं नमः। दक्षकर्ण्णे उँ नमः। वामकर्णे ऊँ नमः। दक्षनासायाम् ऋँ नमः। वामनासायाम् ॠँ नमः। दक्षगण्डे लृँ नमः। वामगण्डे लॄँ नमः। ऊर्ध्वोष्ठे एँ नमः। अधरोष्ठे ऐं नमः। ऊर्ध्वदन्तपङ्क्तौ ओं नमः। अधोदन्तपङ्क्तौ औं नमः। शिरसि अँ नमः। मुखे अः नमः। दक्षिणबाहुमूले कँ नमः। कूर्प्परे खँ नमः। मणिबन्धे गँ नमः। अङ्गुलीमूले घँ नमः। अङ्गुलग्रे ङँ नमः। वामबाहुमूले चँ नमः, कूर्प्परे छँ नमः। मणिबन्धे जँ नमः। अङ्गुलीमूले झँ नमः, अङ्गुल्यग्रे ञँ नमः। दक्षिणोरुमूले टँ नमः। जानुनि ठँ नमः। गुल्फे डँ नमः, अङ्गुलीमूले ढँ नमः। अङ्गुल्यग्रे णँ नमः। वामोरुमूले तँ नमः। जानुनि थँ नमः। गुल्फे दँ नमः। अङ्गुलीमूले धँ नमः। अङ्गुल्यग्रे नँ नमः। दक्षपार्श्वे पँ नमः। वामपार्श्वे फँ नमः। पृष्ठे बँ नमः। नाभौ भँ नमः। उदरे मँ नमः। हृदये यँ त्वगात्मने नमः। दक्षांसे रँ असृगात्मने नमः, ककुदि लँ मांसात्ले नमः। वामांसे वँ मेदआत्मने नमः। हृदयाद्दक्षभुजाग्रान्तं शमस्थ्यात्मने नमः। हृदयाद्वामभुजाग्रान्तं षँमज्ञात्मने नमः। हृदयाद्दक्ष-पादाग्रान्तं सँ शुक्रात्मने नमः। हृदादिवामपादाग्रान्तं हँ आत्मने नमः। हृदयान्मस्तकान्तं क्षंपरमात्मने नमः॥

इन न्यासों को करने बाद पुनः निम्न न्यासों को करें—

ऋष्यादिन्यासः—ॐ पिप्पलाद ऋषये नमः शिरसि। निवृच्छन्दसे नमः मुखे। ज्येष्ठादेवतायै नमः हृदि। धूं बीजाय नमः गुह्ये। स्वाहा शक्तये नमः पादयोः। धूमावती कीलकाय नमः नाभौ। विनियोगाय नमः सर्वाङ्गे।

करन्यासः—ॐ धूं धूँ अङ्गुष्ठाभ्यां नमः। ॐ धूं तर्जनीभ्यां नमः। ॐ मां मध्यमाभ्यां नमः। ॐ वं अनामिकाभ्यां नमः। ॐ त्यैं कनिष्ठिकाभ्यां नमः। स्वाहा करतलकरपृष्ठाभ्यां नमः।

हृदयादिषडङ्गन्यासः—ॐ धूं धूं हृदयाय नमः। ॐ धूं शिरसे स्वाहा। ॐ मां शिखायै वषट्। ॐ वं कवचाय हुम्। ॐ त्यैं नेत्रत्रयाय वौषट्। ॐ स्वाहा अस्त्राय फट्।

## सर्वदेववैदिकमन्त्रन्यासः

१. ॐ अग्निमीले पुरोहितं यज्ञस्य देवमृत्विजम्॥ होतारं रत्नधातम्॥ पादयो न्यसामि॥ २. ॐ इषेत्वोर्ज्जेत्वाव्वायवस्थदेवोवः सविताप्प्रार्पयतु- श्रेष्ठतमा यकर्मणऽआप्प्यायध्वमघ्न्याऽइन्द्रायभागंप्रजावतीरनमीवाऽअ- यक्ष्मामावस्तेनइशतमाघसर्ठ०सो ध्रुवाऽअस्मिन्गोपतौस्यात बह्वीर्यज- मानस्यपशून्पाहि॥ गुल्फयो न्यसामि॥ ३. ॐ अग्नआयाहिवीतयेगृणानो- हव्यदातये॥ निहोतासत्सिबर्हिषि॥ जङ्घयो न्यसामि॥ ४. ॐ शन्नोदेवी रभिष्टय ऽआपो भवन्तु पीतये। शं य्योरभिस्त्रवन्तु नः॥ जान्वो न्यसामि॥ ५. ॐ एका च मे तिस्रश्च्च मे तिस्रश्च्च मे पञ्च च मे पञ्च च मे सप्त च मे सप्त च मे नव च मे नव च मऽ एकादश च मऽ एका दश च मे त्रयोदश च मे त्रयोदश च मे पञ्चदश च मे पञ्चदश च मे सप्तदश च मे सप्तदश च मे नवदश च मे नवदश च मऽ एकविर्ठ० शतिश्च्च मऽ एकविर्ठ० शतिश्च्च मे त्रयोविर्ठ० शतिश्च्च मे त्रयोविर्ठ० शतिश्च्च म पञ्चविर्ठ० शतिश्च्च मे पञ्चविर्ठ० शतिश्च्च मे सप्तविर्ठ० शतिश्च्च मे सप्तविर्ठ० शतिश्च्च मे नवविर्ठ० शतिश्च्च मे नवविर्ठ० शतिश्च्च मऽ एकत्रिर्ठ० शच्च मऽ एक त्रिर्ठ० शच्च मे त्रयस्त्रिर्ठ० शच्च मे यज्ञेन कल्प्यन्ताम्॥ ६. ॐ स्वस्तिनऽइन्द्रोवृद्धश्रवाः स्वस्तिनः पूषा विश्ववेदाः। स्वस्ति- नस्ताक्ष्यौऽअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्द्दधातु॥ जठरे न्यसामि॥ ७. ॐ दीर्घायुस्तऽओषधेखनिता यस्मै च त्वा खनाम्यहम्। अथोत्वन्दीर्घायु- र्भूत्वाशतवल्शाविरोहतात्॥ हृदये न्यसामि॥ ८. ॐ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्प्पात्। सं बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन् देव ऽएकः॥ कण्ठे न्यसामि॥ ९. ॐ त्रातार- मिन्द्रमवितारमिन्द्रर्ठ० हवेहवे सुहवर्ठ० शूरमिन्द्रम्। ह्वयामि शक्क्रं पुरुहूतमिन्द्रर्ठ० स्वस्ति नो मघवा धात्त्विन्द्रः॥ वक्त्रे न्यसामि॥ १०. ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्। उर्वारुकमिव बन्धनान्मृत्यो-

र्मुक्षीय माऽमृतात्॥ स्तनयोर्नेत्रयोश्च न्यसामि॥ ११. ॐ मूर्द्धानन्दिवो-ऽअरतिं पृथिव्या वैश्वानरमृत ऽआ जातमग्निम्। कविर्ठ० सम्म्राजम-तिथिं जनानामासन्ना पात्रं जनयन्त देवाः॥ मूर्ध्नि न्यसामि॥

## धूमावतीमूर्तौ षोडशन्यासान्तरं निवृत्तिन्यासः कार्यः

ॐ ह्रीं अं निवृत्त्यै नमः शिरसि न्यसामि॥ १॥ ॐ ह्रीं आँ प्रतिष्ठायै नमः मुखे न्यसामि॥ २॥ ॐ ह्रीं इं विद्यायै नमः दक्षिणनेत्रे न्यसामि॥ ३॥ ॐ ह्रीं ईं शान्त्यै नमः वामनेत्रे न्यसामि॥ ४॥ ॐ ह्रीं उं धुन्धिकायै नमः दक्षिणश्रोत्रे न्यसामि॥ ५॥ ॐ ह्रीं ऊं दीपिकायै नमः वामश्रोत्रे न्यसामि॥ ६॥ ॐ ह्रीं ऋं रेचिकायै नमः दक्षिणनासापुटे न्यसामि॥ ७॥ ॐ ह्रीं ॠं मोचिकायै नमः वामनासापुटे न्यसामि॥ ८॥ ॐ ह्रीं ऌं परायै नमः दक्षकपोले न्यसामि॥ ९॥ ॐ ह्रीं ॡं सूक्ष्मायै नमः वामकपोले न्यसामि॥ १०॥ ॐ ह्रीं एं सूक्ष्मामृतायै नमः ऊर्ध्व-दन्तपङ्क्तौ न्यसामि॥ ११॥ ॐ ह्रीं ऐं ज्ञानामृतायै नमः अधोदन्तपङ्क्तौ न्यसामि॥ १२॥ ॐ ह्रीं ओं सावित्र्यै नमः ऊर्ध्वोष्ठे न्यसामि॥ १३॥ ॐ ह्रीं औं व्यापिन्यै नमः अधरोष्ठे न्यसामि॥ १४॥ ॐ ह्रीं अं सुरूपायै नमः जिह्वायां न्यसामि॥ १५॥ ॐ ह्रीं अः अनन्तायै नमः कण्ठे न्यसामि॥ १६॥ ॐ ह्रीं कं सृष्ट्यै नमः दक्षबाहुमूले न्यसामि॥ १७॥ ॐ ह्रीं खं ऋध्यै नमः दक्षकूर्परे न्यसामि॥ १८॥ ॐ ह्रीं गं स्मृत्यै नमः दक्षमणिबन्धे न्यसामि॥ १९॥ ॐ ह्रीं घं मेधायै नमः दशकराङ्गुलिमूलेषु न्यसामि॥ २०॥ ॐ ह्रीं ङं कान्त्यै नमः दशाङ्गुल्यग्रेषु न्यसामि॥ २१॥ ॐ ह्रीं चं लक्ष्म्यै नमः वामबाहुमूले न्यसामि॥ २२॥ ॐ ह्रीं छं द्युत्यै नमः वामकूर्परे न्यसामि॥ २३॥ ॐ ह्रीं जं स्थिरायै नमः वाममणिबन्धे न्यसामि॥ २४॥ ॐ ह्रीं झं स्थिरायै नमः वामाङ्गुलिमूले न्यसामि॥ २५॥ ॐ ह्रीं ञं सिध्यै नमः वामाङ्गुल्यग्रेषु न्यसामि॥ २६॥ ॐ ह्रीं टं जरायै नमः दक्षपादमूले न्यसामि॥ २७॥ ॐ ह्रीं ठं पालिन्यै नमः दक्षजानुनि न्यसामि॥ २८॥ ॐ

ह्रीं डं शान्त्यै नमः दक्षगुल्फे न्यसामि॥ २९॥ ॐ ह्रीं ढं ऐश्वर्यै नमः दक्षपादाङ्गुलीषु न्यसामि॥ ३०॥ ॐ ह्रीं णं रत्यै नमः वामपादमूले न्यसामि॥ ३१॥ ॐ ह्रीं तं कामिन्यै नमः दशपादमूले न्यसामि॥ ३२॥ ॐ ह्रीं थं रदायै नमः वामजानुनि न्यसामि॥ ३३॥ ॐ ह्रीं दं ह्लादिन्यै नमः वामगुल्फे न्यसामि॥ ३४॥ ॐ ह्रीं धं प्रीत्यै नमः वामपादाङ्गुलिमूले न्यसामि॥ ३५॥ ॐ ह्रीं नं दीर्घायै नमः वामपादाङ्गुल्यग्रेषु न्यसामि॥ ३६॥ ॐ ह्रीं पं तीक्ष्णायै नमः दक्षिणकुक्षौ न्यसामि॥ ३७॥ ॐ ह्रीं फं सुप्त्यै नमः वामकुक्षौ न्यसामि॥ ३८॥ ॐ ह्रीं बं अभयायै नमः पृष्ठे न्यसामि॥ ३९॥ ॐ ह्रीं भं निद्रायै नमः नाभौ न्यसामि॥ ४०॥ ॐ ह्रीं मं मात्रे नमः उदरे न्यसामि॥ ४१॥ ॐ ह्रीं यं शुद्धायै नमः हृदि न्यसामि॥ ४२॥ ॐ ह्रीं रं क्रोधिन्यै नमः कण्ठे न्यसामि॥ ४३॥ ॐ ह्रीं लं कृपायै नमः ककुदि न्यसामि॥ ४४॥ ॐ ह्रीं वं उत्कायै नमः स्कन्धयोर्न्यसामि॥ ४५॥ ॐ ह्रीं शं मृत्यवे नमः दक्षिणकरे न्यसामि॥ ४६॥ ॐ ह्रीं षं पीतायै नमः वामकरे न्यसामि॥ ४७॥ ॐ ह्रीं सं श्वेतायै नमः दक्षिणपादे न्यसामि॥ ४८॥ ॐ ह्रीं हं अरुणायै नमः वामपादे न्यसामि॥ ४९॥ ॐ ह्रीं त्रं असितायै नमः मूर्द्धादिपादान्तं न्यसामि॥ ५०॥ ॐ ह्रीं क्षं सर्वसिद्धिगौर्यै नमः पादादिमूर्द्धान्ते न्यसामि॥ ५१॥

इति तृतीयो निवृत्तिन्यासो देवीमूर्तौ। निवृत्तिन्यासान्तरं वशिन्यादि-न्यासो देवीमूर्त्तौ कार्यः। तद्यथा— ॐ अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः क्लृं वसिनीवाग्देवतायै नमः ब्रह्मरन्ध्रे न्यसामि॥ १॥ ॐ कं खं गं घं ङं क्लीं ह्रीं कामेश्वरीवाग्देवतायैश्वर्यै नमः ललाटे न्यसामि॥ २॥ ॐ चं छं जं झं ञं क्लीं मोदिनीवाग्देवतायै नमः भ्रूमध्ये न्यसामि॥ ३॥ ॐ टं ठं डं ढं णं ब्ल्यूं विमलावाग्देवतायै नमः कण्ठे न्यसामि॥ ४॥ ॐ तं थं दं धं नं ज्म्रीं अरुणावाग्देवतायै नमः हृदि न्यसामि॥ ५॥ ॐ पं फं बं भं मं ह्स्लब्ल्यूं जयनीवाग्देवतायै नमः नाभौ

न्यसामि॥ ६॥ ॐ यं रं लं वं हस्ल्व्यूं सर्वेश्वरीवाग्देवतायै नमः आधारे न्यसामि॥ ७॥ ॐ शं षं सं हं क्षं क्ष्म्रीं कौलिनीवाग्देवतायै नमः सर्वाङ्गे न्यसामि॥ ८॥

स यथा—स्वहृत्पद्मात् ऐश्वर्यं तेजःपुञ्जं वामनाड्या निःसार्य ब्रह्मरन्ध्रेण प्रतिमाया बुद्धिः कर्मेन्द्रियाणि मनःसहितानि यथास्थानं हृत्पद्मे प्रणवेन पुरुषं न्यसेत्। ॐ मं जीवात्मने नमः ॐ भं प्राणात्मने नमः देवीशरीरे व्यापकं न्यसामि ॥ १॥ ॐ बं बुद्ध्यात्मने ॐ फं अहङ्कारात्मने० ॐ पं मन आत्मने नमः हृदि न्यसामि॥ २॥ ॐ नं शब्दतन्मात्रात्मने नमः शिरसि न्यसामि॥ ३॥ ॐ धं स्पर्शतन्मात्रात्मने नमः मुखे न्यसामि॥ ४॥ ॐ दं रूपतन्मात्रात्मने नमः हृदये न्यसामि॥ ५॥ ॐ थं रसतन्मात्रात्मने नमः हस्तयोर्न्यसामि॥ ६॥ ॐ तं गन्धतन्मात्रात्मने नमः पादयोर्न्यसामि॥ ७॥ ॐ णं श्रोत्रात्मने नमः श्रोत्रयोर्न्यसामि ॥ ८॥ ॐ ढं त्वगात्मने नमः त्वचि न्यसामि॥ ९॥ ॐ डं चक्षुरात्मने नमः नेत्रयोर्न्यसामि॥ १०॥ ॐ ठं जिह्वात्मने नमः जिह्वायां न्यसामि॥ ११॥ ॐ टं घ्राणात्मने नमः घ्राणे न्यसामि॥ १२॥ ॐ ञं वागात्मने नमः वाचि न्यसामि॥ १३॥ ॐ झं पाण्यात्मने नमः पाण्योर्न्यसामि॥ १४॥ ॐ जं पदात्मने नमः पादयोर्न्यसामि॥ १५॥ ॐ छं पांय्वात्मने नमः पायौ न्यसामि॥ १६॥ ॐ चं उपस्थात्मने नमः उपस्थे न्यसामि॥ १७॥ ॐ ङं पृथिव्यात्मने नमः पादयोर्न्यसामि॥ १८॥ ॐ घं अवात्मने नमः वस्तौ न्यसामि॥ १९॥ ॐ गं तेजात्मने नमः हृदि न्यसामि॥ २०॥ ॐ खं प्राणात्मने नमः घ्राणे न्यसामि॥ २१॥ ॐ कं आकाशात्मने नमः शिरसि न्यसामि॥ २२॥ ॐ षं सूर्यात्मने नमः हृत्पुण्डरीकमध्ये न्यसामि॥ २३॥ ॐ सं हृत्पुण्डरीकमध्ये न्यसामि॥ २४॥ ॐ वं वह्न्यात्मने नमः सामात्मने नमः हृत्पुण्डरीकमध्ये न्यसामि॥ २५॥ ततः अर्चाबीजं स्वाभिमतं मूर्त्यास्वमन्त्रेण संयोज्य,

''विशेषबीजाद्यनुपलब्धौ तु देवतानाम्नः आद्यमक्षरं रसानुस्वारं चतुर्थ्यन्तं तत्तद्देवतानाम्ना संयोज्य'' तद्यथा—

ॐ शिं शिवात्मने नमः ॥ १ ॥ ॐ विं विष्ण्वात्मने नमः ॥ २ ॥ ॐ रां रामात्मने नमः ॥ ३ ॥ इत्यादिप्रकारेण देवं भावयित्वा ॥२६ ॥ ॐ यं सर्वात्मने नमः—इति सर्वसाक्षिणं भावयित्वा ॥ २७ ॥ ॐ गं सर्वात्मने नमः इति देवं सर्वतोमुख भावयित्वा ॥ २८ ॥ ॐ वः अनुग्राहकात्मने नमः इति अनुग्राहकं भावयित्वा ॥ २९ ॥ ॐ यं सर्वभूतात्मने नमः इति सर्वभूतकारणं ध्यात्वा ॥ ३० ॥ ॐ लं सर्वसंहारात्मने नमः इति सर्वसंहारात्मकं भावयित्वा ॥ ३१ ॥ ॐ कोषात्मने नमः इति सर्वक्षयकारं ध्यात्वा— ॥ ३२ ॥ तत्त्वत्रयं न्यसेत्—ॐ आत्मतत्वाय नमः ॥ १ ॥ ॐ आत्मतत्वाधिपतये ब्रह्मणे नमः ॥ २ ॥ ॐ पादयोर्न्यसामि ॥ ३३ ॥ ॐ विद्यातत्वाय नमः ॥ १ ॥ ॐ विद्यातत्वाधिपतये विष्णवे नमः ॥ २ ॥ हृदये न्यसामि ॥ ३४ ॥ ॐ शिवतत्वाय नमः ॥ १ ॥ ॐ शिवतत्वाधिपतये रुद्राय नमः ॥ २ ॥ शिरसि न्यसामि ॥ ३५ ॥ इति जीवन्यासः षोडशः सर्वदेवसाधारणः । एते षोडश न्यासाः सर्वदेवसाधारणाः ।

## एककुण्डीयपक्षे होमः

तत्रादौ आचार्यः कुण्डस्येशान्यां दक्षिणोत्तरक्रमेण सम्पातोदकार्थं मूर्ति-मूर्तिप-लोकेश स्थापनार्थं च कलशद्वयं महीद्यौरित्यादिना मन्त्रेण संस्थाप्य कलशे पूर्णपात्रोपरि—ॐ स्योना पृथिवी नो भवानृक्षरा निवेशनी। यच्छा नः शर्म सप्रथाः ॥ ॐ पृथिवीमूर्तये नमः। पृथिवी-मूर्तिमावाहयामि ॥ १ ॥ ॐ अघोरेभ्योऽथ घोरेभ्यो घोर घोरतरेभ्यः। शर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः स्वाहा ॥ ॐ पृथिवी-मूर्त्यधिपतये शर्वाय नमः । पृथिवीमूर्त्यधिपतिं शर्वमावाहयामि ॥ २ ॥ ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳ हवे हवे सुहवꣳ शूरमिन्द्रम्। ह्वयामि शक्रं पुरुहूतमिन्द्रꣳ स्वस्तिनो मघवा धात्विन्द्रः ॥ ॐ इन्द्राय नमः। इन्द्रमावाहयामि ॥ ३ ॥ ॐ अग्निं दूतं पुरोदधे हव्यवाहमुप ब्रुवे ॥ देवाँ२ ॥

आसादयादिह॥ ॐ अग्निमूर्तये नमः। अग्निमूर्तिमावाहयामि॥ ४॥ ॐ तेजः पशूनार्ठ० हविरिन्द्रियावत्परिस्त्रुता पयसा सारधं मधु। अश्विभ्यां दुग्धं भिषजा सरस्वत्या सुतासुताभ्याममृतः सोम इन्दुः॥ ॐ अग्निमूर्त्यधिपतये पशुपतये नमः। अग्निमूर्त्यधिपति पशुपतिमावाहयामि॥ ५॥ ॐ त्वं नो अग्ने तव देव पायुभिर्मघोनो रक्ष तन्वश्च वन्द्य। त्राता तोकस्य तनये गवामस्य निमेषर्ठ० रक्षमाणस्तव व्रते॥ ॐ अग्नये नमः। अग्निमावाहयामि॥ ६॥ ॐ सुवीरो वीरान्प्रजनयन्परीह्यभिरायस्पोषेण यजमानम्। संजग्मानो दिवा पृथिव्या शुक्रः शुक्रशोचिषा निरस्तः शण्डः शुक्रस्याधिष्ठानमसि॥ ॐ यजमानमूर्तये नमः। यजमानमूर्तिमावाहयामि॥ ७॥ ॐ उग्रश्च भीमश्च ध्वान्तश्च धुनिश्च। सासह्वाँश्चाभियुग्वा च विक्षिपः स्वाहा॥ ॐ यजमानमूर्त्यधिपतये उग्राय नमः। यजमानमूर्त्यधिपतिमुग्रमावाहयामि॥ ८॥ ॐ यमाय त्वाङ्गिरस्वते पितृमते स्वाहा। घर्माय स्वाहा घर्मः पित्रे॥ ॐ यमाय नमः। यममावाहयामि॥ ९॥ ॐ उदु त्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्यर्ठ० स्वाहा॥ ॐ सूर्यमूर्तये नमः। सूर्यमूर्तिमावाहयामि॥ १०॥ ॐ इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः। यथा शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम्॥ ॐ सूर्यमूर्त्यधिपतये रुद्राय नमः। सूर्यमूर्त्यधिपतिं रुद्रमावाहयामि॥ ११॥ ॐ असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य। अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु॥ ॐ निर्ऋतये नमः। निर्ऋतिमावाहयामि॥ १२॥ ॐ आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसे॥ ॐ जलमूर्तये नमः। जलमूर्तिमावाहयामि॥ १३॥ ॐ नमो बभ्लुशाय व्याधिनेऽन्नानां पतये नमो नमो भवस्य हेत्यै जगतां पतये नमो नमो रुद्रायाततायिने क्षेत्राणां पतये नमो नमः सूतायाहन्त्यै वनानां पतये नमः॥ ॐ जलमूर्त्यधिपतये भवाय नमः। जलमूर्त्यधिपतिं भवमावाहयामि॥ १४॥ ॐ इमं मे वरुण श्रुधी हवमद्या च मृडय। त्वाम-

वस्युराचके॥ ॐ वरुणाय नमः। वरुणमावाहयामि॥ १५॥ ॐ तव वायवृतस्पते त्वष्टुर्जामातरद्भुत। अवाꣳसि स्यावृणीमहे॥ ॐ वायुमूर्तये नमः। वायुमूर्तिमावाहयामि॥ १६॥ ॐ तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम्। पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये॥ ॐ वायुमूर्त्यधिपतये ईशानाय नमः। वायु-मूर्त्यधिपतिमीशानमावाहयामि॥ १७॥ ॐ आ नो नियुद्भिः शतिनीभि-रध्वरꣳ सहस्रिणीभिरुपयाहि यज्ञम्। वायो अस्मिन्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः॥ ॐ वायवे नमः। वायुमावाहयामि॥ १८॥ ॐ वयꣳ सोम व्रते तव मनस्तनूषु बिभ्रतः। प्रजावन्तः सचेमहि॥ ॐ सोममूर्तये नमः। सोममूर्तिमावाहयामि॥ १९॥ ॐ उग्रं लोहितेन मित्रꣳ सौव्रत्येन रुद्रं दौर्व्रत्येनेन्द्रं प्रक्रीडेन मरुतो बलेन साध्यान्प्रमुदा। भवस्य कण्ठ्यꣳ रुद्रस्यान्तःपार्श्व्यं महादेवस्य यकृच्छर्वस्य वनिष्ठुः पशुपतेः पुरीतत्॥ ॐ सोममूर्त्यधिपतये महादेवाय नमः। सोममूर्त्यधिपतिं महादेव-मावाहयामि॥ २०॥ ॐ अभि त्यं देवꣳसवितारमोण्योः कविक्रतु-मर्चामि सत्यसवꣳरत्नधामभि प्रियं मतिं कविम्। ऊर्ध्वा यस्याऽमतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वः। प्रजाभ्यस्त्वा प्रजास्त्वानुप्राणन्तु प्रजात्वमनुप्राणिहि॥ ॐ कुबेराय नमः। कुबेर-मावाहयामि॥ २१॥ ॐ आदित्यं गर्भं पयसा समङ्ग्धि सहस्रस्य प्रतिमां विश्वरूपम्। परिवृङ्ग्धि हरसा माभिमꣳस्थाः शतायुषं कृणुहि चीयमानाः॥ ॐ आकाशमूर्तये नमः। आकाशमूर्तिमावाहयामि॥ २२॥ ॐ मृगो न भीमः कुचरो गिरिष्ठाः परावत आजगन्था परस्याः। सृकꣳसꣳशाय पविमिन्द्र तिग्मं वि शत्रून् ताढि वि मृधो नदस्व॥ ॐ आकाशमूर्त्यधिपतये भीमाय नमः। आकाशमूर्त्यधिपतिं भीम-मावाहयामि॥ २३॥ ॐ अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः। ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः॥ ॐ ईशानाय नमः। ईशानमावाहयामि॥ २४॥ एता देवता आवाह्य सम्पूजयेत्।

**त्वया श्रोत्रं गृह्णामि प्रजाभ्यः॥ १४॥ इयमुपरि मतिस्तस्यै वाङ्मात्या हेमन्तोवाच्यः पङ्क्तिर्हैमन्ती पङ्क्त्यै निधनवन्निधनवत आग्रयणऽआग्रयणात्रिणवत्रयस्त्रिंर्ठ० शौ त्रिणवत्रयस्त्रिंर्ठ० शाभ्यार्ठ० शाक्वररैवते विश्वकर्म ऋषिः प्रजापतिगृहीतया त्वया वाचं गृह्णामि प्रजाभ्यो लोकं ता इन्द्रम्॥ १५॥**

---

**भावार्थ**—द्वारा बनाई गई ईट को चिति में धरने के द्वारा मैं प्रजाओं के लिए श्रोत को ही ग्रहण करता हूँ॥ १४॥ यह ऊपर जो चन्द्रस्वरूपा मति स्थित है। हे इष्टके! तुम मति के स्वरूपवाली हो। उस तुम वाक्स्वरूपा को मैं चिति में धरता हूँ। वाणी से हेमन्तऋतु उत्पन्न हुई। हे इष्टके! तुम हेमन्तऋतुस्वरूपा हो। उस तुम हेमन्तऋतुस्वरूपा ईट को मैं चिति में धरता हूँ। हेमन्तऋतु से पंक्तिछन्द उत्पन्न हुआ। हे इष्टके! तुम पंक्तिछन्दस्वरूपा हो। उस तुम पंक्तिछन्द-स्वरूपिणी को मैं चिति में धरता हूँ। पंक्तिछन्द से निधनवत्साम बना। हे इष्टके! तुम निधनवत्साम के स्वरूपवाली हो। उस तुम निधनवत्साम के स्वरूपवाली ईट को मैं चिति में धरता हूँ। निधनवत्साम से आग्रायणग्रह उत्पन्न हुआ। हे इष्टके! तुम आग्रायणग्रह के स्वरूपवाली हो। उस तुम आग्रायणग्रह के स्वरूपवाली ईट को मैं चिति में धरता हूँ। आग्रायणग्रह से त्रिणव और त्रयस्त्रिंशस्तोम उत्पन्न हुए। हे इष्टके! तुम त्रिणव और त्रयस्त्रिंशसंज्ञक दोनों स्तोमों के स्वरूपवाली हो। उस तुम तत्स्वरूपा को मैं चिति में धरता हूँ। उन दोनों स्तोमों से क्रमशः शाक्वर-रैवत्साम उत्पन्न हुए। हे इष्टके! तुम उन शाक्वर-रैवत्सामों के स्वरूपवाली हो। उस तुम उन दो सामों के स्वरूपवाली ईट को मैं चिति में धरता हूँ। उन दोनों सामों से विश्वकर्मा ऋषि उत्पन्न हुए। हे इष्टके! तुम वाग्रूपा हो। तुम्हें मैं चिति में धरता हूँ। उस तुम प्रजापतिसृष्ट को चिति में धरकर मैं प्रजार्थ वाणी को ही पकड़ता हूँ॥ १५॥

आचार्य भगवती धूमावती देवी के इस मन्त्र का उच्चारण करें—**ॐ धूम्रा बभ्रुनीकाशा पितृणार्ठ० सोमवतां बभ्रवो धूम्रनीकाशाः पितृणां बर्हिषदां कृष्णा बभ्रुनीकाशाः पितृणामग्निष्वात्तानां कृष्णाः पृषन्तस्त्रैयम्बकाः ॥**

आचार्य निम्न मन्त्र और श्लोक का उच्चारण करें—**ॐ मनो जूतिर्जुषता-माज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञर्ठ० समिमं दधातु। विश्वेदेवास इह मादयन्तामों ३ँप्रतिष्ठ ॥**

**अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च।**
**अस्यै देवत्वमर्चायै मामहेति च कश्चन॥**

## पिण्डिकामन्त्रहोमः

आचार्य पूर्व में दिए गए पिण्डिका मन्त्रों से प्रत्येक के लिए अट्ठाईस बार तिलों से कुण्ड में हवन करावें। इसके उपरान्त ही धूमावती देवी के **ॐ धूम्रा बभ्रुनीकाशा पितृणार्ठ० सोमवतां बभ्रवो धूम्रनीकाशाः पितृणां बर्हिषदां कृष्णा बभ्रुनीकाशाः पितृणामग्निष्वात्तानां कृष्णाः पृषन्तस्त्रैयम्बकाः ॥** इस मन्त्र से आचार्य एक सौ आठ बार चरु द्वारा कुण्ड में यजमान से हवन करावें।

## धूमावत्यायुधहोमः

**१. ॐ वज्राय स्वाहा, २. ॐ शक्तये स्वाहा, ३. ॐ दण्डाय स्वाहा, ४. ॐ खड्गाय स्वाहा, ५. ॐ पाशाय स्वाहा, ६. ॐ अङ्कुशाय स्वाहा, ७. ॐ गदाय स्वाहा, ८. ॐ शूलाय स्वाहा, ९. ॐ खेटाय स्वाहा, १०. ॐ चक्राय स्वाहा।**

---

धूमावतीदेवताया: पादनाभिवक्ष:स्थलादिस्पर्शने अष्टौ मन्त्रा:

१. यज्जाग्रतो दूरमुदैति दैवं यदु सुप्तस्य तथैवेति। दूरगमं ज्योतिषां ज्योतिरेकं तन्मे मन: शिवसङ्कल्पमस्तु॥ २. तस्माद्विराडजायत विराजो अधि पूरुष:। स जातो अत्यरिच्यत पश्चाद् भूमिमथो पुर:॥ ३. सहस्रशीर्षा पुरुष: सहस्राक्ष: सहस्रपात्। स भूमिं विश्वतो वृत्वा ऽत्यतिष्ठद्दशाङ्गुलम्॥ ४. अभित्वा शूर नोनुमो ऽदुग्धा इव धेनव:। ईशानमस्य जगत: स्वर्दृशमीशानमिन्द्र तस्थुष:॥ ५. पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्। उतामृतत्वस्येशानो यदन्नेनातिरोहति॥ ६. त्रिपादूर्ध्व उदैत्पुरुष: पादोऽस्येहाभवत् पुन:। ततो विष्वङ् व्यक्रामत् साशनानशने अभि॥ ७. ये नेदं भूतं भवनं भविष्यत्परि गृहीतममृतेन सर्वम्। येन यज्ञस्तायते सप्तहोता तन्मे मन: शिवसङ्कल्पमस्तु॥ ये नेदं सर्व जगतो बभूव यद्देवा अपि महतो जातवेदा:। यदेवाग्यं तपसो ज्योतिरेकं तन्मे मन: शिवसङ्कल्पमस्तु। ८. न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते। अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे॥

उपरोक्त आठ मन्त्रों का आचार्य उच्चारण करके जल से भगवती धूमावती के चरणों का स्पर्श यजमान से करावें। यह पहला पर्याय है। पुन: इन्हीं आठ मन्त्रों का उच्चारण करके भगवती धूमावती की नाभि का जल द्वारा यजमान से स्पर्श करावें। यह दूसरा पर्याय है। तीसरी बार इन्हीं आठ मन्त्रों उच्चारण करके भगवती धूमावती के वक्ष:स्थल का जल द्वारा यजमान से स्पर्श करावें। यह तीसरा पर्याय है और चौथी बार फिर इन्हीं आठ मन्त्रों का उच्चारण करके भगवती धूमावती के सिर का स्पर्श जल द्वारा यजमान से करावें। यह चौथा पर्याय है। इस प्रकार चार बार इन आठों मन्त्रों का जप करें, कुल जप बत्तीस बार ही होता है।

( प्रधानपूजनम् )

## श्रीधूमावतीपूजनम्

संकल्पः—देशकालौ संकीर्त्य, अमुकगोत्रोत्पन्नोऽहम् अमुक-शर्माऽहं ( वर्माऽहं, गुप्तोऽहं, दासोऽहं ) श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं मम सकुटुम्बस्य सपरिवारस्य श्रीधूमावतीदेव्यनुग्रहतो देवकृत-ग्रहकृत-राजकृत-मनुष्यकृत-सर्वविधबाधानिवृत्तिपूर्वकं धन-धान्य-पुत्र-पौत्र-दीर्घायुरारोग्यैश्वर्यादिसमृद्ध्यर्थं, सर्वाभीष्टफलप्राप्तिपूर्वकधर्मार्थ-काम-मोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा श्रीधूमावतीदेव्याः प्रीत्यर्थं यथोपचारैः धूमावतीपूजनमहं करिष्ये।

ध्यानम्

धूम्राभां धूम्रवस्त्रां प्रकटितदशनां मुक्तबालाम्बराढ्यां
काकाङ्कस्यन्दनस्थां धवलकरयुगां शूर्पहस्तातिरूक्षाम्।
नित्यं क्षुत्क्षान्तदेहां मुहुरतिकुटिलां वारिवाञ्छाविचित्तां
ध्यायेद् धूमावतीं वामनयनयुगलां भीतिदां भीषणास्याम्॥

श्रीधूमावत्यै नमः ध्यायामि।

आवाहनम्

ॐ धूम्रा बभ्रुनीकाशा पितृणार्ठ० सोमवतां बभ्रवो धूम्रनीकाशाः पितृणां बर्हिषदां कृष्णा बभ्रुनीकाशाः पितृणामग्निष्वात्तानां कृष्णाः पृषन्तस्त्रैयम्बकाः॥

ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।
स भूमिर्ठ० सर्वत स्पृत्वात्यतिष्ठद्दशाङ्गुलम्॥
देवेशि भक्ति सुलभे सर्वावरणसंयुते।
यावत्त्वां पूजयिष्मामि तावत् त्वं सुस्थिरा भव॥

श्रीधूमावत्यै नमः, आवाहनं समर्पयामि। आवाहनार्थे पुष्पं समर्पयामि।

आसनम्

ॐ पुरुष एवेदर्ठ० सर्वं यद्भूतं यच्च भाव्यम्।
उतामृतत्वस्येशानो यदन्नेनातिरोहति॥
अनेकरत्नसंयुक्तं नानामणिगणान्वितम्।
कार्तस्वरमयं दिव्यमासनं प्रतिगृह्यताम्॥
श्रीधूमावत्यै नमः, आसनं समर्पयामि। आसनार्थे अक्षतान् समर्पयामि।

पाद्यम्

ॐ एतावानस्य महिमातो ज्यायांश्च पूरुषः।
पादो ऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि॥
गङ्गादिसर्वतीर्थेभ्यो मया प्रार्थनयाहृतम्।
तोयमेतत् सुखस्पर्शं पाद्यार्थं प्रतिगृह्यताम्॥
श्रीधूमावत्यै नमः, पाद्यं समर्पयामि।

अर्घ्यम्

ॐ त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः।
ततो विष्वङ् व्यक्रामत्साशनानशने अभि॥
गन्धपुष्पाक्षतैर्युक्तमर्घ्यं सम्पादितं मया।
गृहाण त्वं महादेवि प्रसन्ना भव सर्वदा॥
श्रीधूमावत्यै नमः, अर्घ्यं समर्पयामि।

मधुपर्कम्

ॐ यन्मधुनो मधव्यं परमर्ठ० रूपमन्नाद्यम्। तेनाहं मधुनो मध परमेण रूपेणानाद्येन परमो मधव्योऽन्नादोऽसानि॥
आज्यं दधि मधु श्रेष्ठं पात्रयुग्मसमन्वितम्।
मधुपर्कं गृहाण त्वं शुभदा भव शोभने॥
श्रीधूमावत्यै नमः, मधुपर्कं समर्पयामि।

आचमनीयम्

ॐ ततो विराडजायत विराजो अधि पूरुषः।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः॥
जातीलवङ्गकङ्कोल कर्पूरादिसुवासितम्।
गृहाण देवदेवेशि एतदाचमनीयकम्॥
श्रीधूमावत्यै नमः, आचमनीयं जलं समर्पयामि।

स्नानम्

ॐ तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम्।
पशूंस्तांश्चक्रे वायव्यानारण्या ग्राम्याश्च ये॥
मदाकिन्याः समानीतै हेमाम्भोरुहवासितैः।
स्नानं कुरुष्व देवेशि सलिलैश्च सुगन्धिभिः॥
श्रीधूमावत्यै नमः, स्नानीयं जलं समर्पयामि।

पुनराचमनीयम्

ॐ आच्या जानु दक्षिणतो निषद्येमं यज्ञमभिगृणीत विश्वे।
मा हिर्ठ०सिष्ट पितरः केनचिन्नो यद्व आगः पुरुषता कराम॥
उच्छिष्टोप्यशुचिर्वापि यस्याः स्मरणमात्रतः।
शुद्धिमाप्नोति तस्यै ते पुनराचमनीयकम्॥
श्रीधूमावत्यै नमः, पुनराचमनीयं जलं समर्पयामि।

पञ्चामृतस्नानम्

ॐ पञ्च नद्यः सरस्वतीमपियन्ति सस्त्रोतसः।
सरस्वती तु पञ्चधा सो देशेऽभवत्सरित्॥
पयो दधि घृतं चैव मधु च शर्करान्वितम्।
पञ्चामृतं मयाऽऽनीतं स्नानार्थं प्रतिगृह्यताम्॥
श्रीधूमावत्यै नमः, पञ्चामृतस्नानं समर्पयामि। शुद्धोदकस्नानं समर्पयामि।
आचमनीयं जलं समर्पयामि।

शुद्धोदकस्नानम्

ॐ शुद्धवालः सर्वशुद्धवालो मणिवालस्त ऽआश्विनाः। श्येतः श्येताक्षो- ऽरुणस्ते रुद्राय पशुपतये कर्णा यामा ऽअवलिप्ता रौद्रा नभोरूपाः पार्जन्याः॥

शुद्धं यत्सलिलं दिव्यं गङ्गाजलसमं स्मृतम्।
समर्पितं मया भक्त्या स्नानार्थं प्रतिगृह्यताम्॥

श्रीधूमावत्यै नमः, शुद्धोदकस्नानं समर्पयामि। शुद्धोदकस्नानान्ते आचमनीयं जलं समर्पयामि।

वस्त्रम्

ॐ तस्माद्यज्ञात्सर्वहुतऽ ऋचः सामानि जज्ञिरे।
छन्दार्ठ०सि जज्ञिरे तस्माद्यजुस्तस्मादजायत॥

वस्त्रञ्च सोमदैवत्यं लज्जायास्तु निवारणम्।
मया निवेदितं भक्त्या गृहाण परमेश्वरि॥

श्रीधूमावत्यै नमः, वस्त्रद्वयं समर्पयामि। आचमनीयं जलं समर्पयामि।

यज्ञोपवीतम्

ॐ तस्मादश्वा अजायन्त ये के चोभयादतः।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः॥

स्वर्णसूत्रमयं दिव्यं व्रह्मणा निर्मितं पुरा।
उपवीतं मया दत्तं गृहाण परमेश्वरि॥

श्रीधूमावत्यै नमः, यज्ञोपवीतं समर्पयामि। यज्ञोपवीतान्ते आचमनीयं जलं समर्पयामि।

चन्दनम्

ॐ तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः।
तेन देवा अयजन्त साध्या ऋषयश्च ये॥

श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम्।
विलेपनं च देवेशि चन्दनं प्रतिगृह्यताम्॥

श्रीधूमावत्यै नमः, चन्दनं समर्पयामि।

अक्षतान्

ॐ अक्षन्नमीमदन्त ह्यव प्रिया अधूषत। अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजान्विन्द्रते हरी॥

अक्षतान्निर्मलान् दिव्यान् कुङ्कुमाक्तान् सुशोभनान्।
गृहाणेमान् महादेवि प्रसीद परमेश्वरि॥

श्रीधूमावत्यै नमः, अक्षतान् समर्पयामि।

पुष्पमालाम्

ॐ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्।
मुखं किमस्यासीत्किं बाहू किमूरू पादा उच्येते॥

पद्म - शङ्खज - पुष्पादिक्षतपत्रैर्विचित्रताम्।
पुष्पमालां प्रयच्छामि गृहाण त्वं परमेश्वरि॥

श्रीधूमावत्यै नमः, पुष्पमालां समर्पयामि।

बिल्वपत्राणि

ॐ नमो बिल्मिने च कवचिने च नमो वर्मिणे च वरूथिने च नमः। श्रुताय च श्रुतसेनाय च नमो दुन्दुभ्याय चाहनन्याय च॥

अमृतोद्भवः श्रीवृक्षो महादेवप्रियः सदा।
बिल्वपत्रं प्रयच्छामि पवित्रं ते परमेश्वरि॥

श्रीधूमावत्यै नमः, बिल्वपत्राणि समर्पयामि।

दूर्वाङ्कुरान्

ॐ काण्डात्काण्डात् प्ररोहन्ती परुषः परुषस्परि।
एवा नो दूर्वे प्रतनु सहस्रेण शतेन च॥

विष्ण्वादिसर्वदेवानां प्रियपत्रां सुशोभनीम्।
क्षीरसागरसम्भूतां दूर्वां स्वीकुरु सर्वदा॥

श्रीधूमावत्यै नमः, दूर्वाङ्कुरान् समर्पयामि।

तुलसीदलम्

ॐ इदं विष्णु विंचक्रमे त्रेधा निदधेपद्म।
समूढमस्य पाठ० सुरे स्वाहा॥
तुलसीं हेमरूपां च रत्नरूपां च मञ्जरीम्।
भवमोक्षप्रदां तुभ्यमर्पयामि हरिप्रियाम्॥
श्रीधूमावत्यै नमः, तुलसीदलं समर्पयामि।

नानाआभूषणम्

ॐ युवं तमिन्द्रापर्वता पुरोयुधा यो नः पृतन्यादपतन्तमिद्धतं वज्रेण तन्तमिद्धतम्। दूरे चत्ताय छन्त्सद् गहनं यदिनक्षत्॥
हार-कङ्कण-केयूर-मेखला-कुण्डलादिभिः ।
रत्नाढ्यं कुण्डलोपेतं भूषणं प्रतिगृह्यताम्॥
श्रीधूमावत्यै नमः, नानाआभूषणं समर्पयामि।

सुगन्धिद्रव्यम्

ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमाऽमृतात्॥
चन्दनागुरुकर्पूरैः संयुतं कुङ्कुमं तथा।
कस्तूर्यादिसुगन्धांश्च सर्वाङ्गेषु विलेपनम्॥
श्रीधूमावत्यै नमः, सुगन्धिद्रव्यं समर्पयामि।

## आवरणपूजनम्

ॐ संविन्मये परे देवि परामृतरसप्रिये।
अनुज्ञां देहि मातस्त्वं परिवारार्चनाय मे॥

इति पठित्वा पुष्पाञ्जलि दद्यात्। इत्याज्ञां गृहीत्वा षट्कोणकेसरेषु आग्नेय्यादिचतुर्दिक्षु मध्ये दिक्षु च षडङ्गानि पूजयेत्। तद्यथा—ॐ धूं धूं हृदयाय नमः। हृदयश्रीपादुकां पूजयामि तर्पयामि नमः। इति सर्वत्र॥ १॥
ॐ धूं शिरसे स्वाहा। शिरःश्रीपादुकां पूजयामि तर्पयामि नमः॥ २॥
ॐ मां शिखायै वषट्। शिखाश्रीपादुकां पूजयामि तर्पयामि नमः॥ ३॥

ॐ वं नमः कवचाय हुं। कवचश्रीपादुकां पूजयामि तर्पयामि नमः ॥ ४॥
ॐ तिं नेत्रत्रयाय वषट्। नेत्रत्रयश्रीपादुकां पूजयामि तर्पयामि नमः ॥ ५ ॥
ॐ स्वाहा अस्त्राय फट्। अस्त्रश्रीपादुकां पूजयामि तर्पयामि नमः ॥ ६ ॥
इति षडङ्गानि पूजयेत्। ततः पुष्पाञ्जलिमादाय मूलमुच्चार्य-

ॐ अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम्॥

इति पठित्वा पुष्पांजलिं च दत्त्वा पूजितास्तर्पिताः सन्तु इति वदेत्॥
इति प्रथमावरणम्॥

द्वितीयावरणार्चनम्—ततोऽष्टदले पूज्यपूजकयोरन्तराले प्राचीं तदनुसारेण अन्याः दिशः प्रकल्प्य प्राचीक्रमेण ॐ क्षुधायै नमः। क्षुधाश्रीपादुकां पूजयामि तर्पयामि नमः॥ १॥ ॐ तृष्णायै नमः। तृष्णाश्रीपादुकां पूजयामि तर्पयामि नमः॥ २॥ ॐ रत्यै नमः। रतिश्रीपादुकां पूजयामि तर्पयामि नमः ॥ ३ ॥ ॐ निद्रायै नमः। निद्राश्रीपादुकां पूजयामि तर्पयामि नमः ॥ ४॥ ॐ निर्ऋत्यै नमः। निर्ऋतिश्रीपादुकां पूजयामि तर्पयामि नमः॥ ५॥ ॐ दुर्गत्यै नमः। दुर्गतिश्रीपादुकां पूजयामि तर्पयामि नमः ॥ ६ ॥ ॐ रुषायै नमः। रुषश्रीपादुकां पूजयामि तर्पयामि नमः ॥ ७॥ ॐ अक्षमायै नमः। अक्षमाश्रीपादुकां पूजयामि तर्पयामि नमः ॥ ८॥ इत्यष्टौ शक्तिः पूजयित्वा पुष्पाञ्जलिं दद्यात्। इति पूजयेत्।

ॐ अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम्॥

पूर्व दिशायाम्—ॐ लं इन्द्राय नमः। इन्द्र श्रीपादुकां पूजयामि तर्पयामि नमः। आग्नेय कोणेषु—ॐ रं अग्नये तेजोऽधिपतये नमः। अग्नि श्रीपादुकां पूजयामि तर्पयामि नमः। दक्षिण दिशायाम्—ॐ मं यमाय नमः। यम श्रीपादुकां पूजयामि तर्पयामि नमः। नैर्ऋत्य कोणेषु—ॐ क्षं निर्ऋतिये नमः। निर्ऋति श्रीपादुकां पूजयामि तर्पयामि नमः। पश्चिम

दिशायाम्—ॐ वं वरुणाय नमः। वरुण श्रीपादुकां पूजयामि तर्पयामि नमः।वायव्य कोणेषु—ॐ यं वायवे नमः।वायु श्रीपादुकां पूजयामि तर्पयामि नमः। उत्तर दिशायाम्—ॐ सं सोमाय नमः। सोम श्रीपादुकां पूजयामि तर्पयामि नमः। ईशान कोणेषु—ॐ हं ईशान्ये नमः। ईशान श्रीपादुकां पूजयामि तर्पयामि नमः। इन्द्र च ईशान मध्यभागे—ॐ आं ब्रह्मणे नमः। ब्रह्म श्रीपादुकां पूजयामि तर्पयामि नमः। वरुण च निर्ऋति मध्यभागे—ॐ ह्रीं अनन्ताय नमः। अनन्त श्रीपादुकां पूजयामि तर्पयामि नमः।

तदुपरान्त इन्द्रादि दिक्पालों के पास उनके आयुधों का पूजन और तर्पण निम्न नाममंत्रों द्वारा करें—

इन्द्र समीपे—ॐ वं व्रजाय नमः। वज्र श्रीपादुकां पूजयामि तर्पयामि नमः। अग्नि समीपे—ॐ शं शक्तये नमः। शक्ति श्रीपादुकां पूजयामि तर्पयामि नमः।यम समीपे—ॐ दं दण्डाय नमः।दण्ड श्रीपादुकां पूजयामि तर्पयामि नमः।निर्ऋति समीपे—ॐ खं खड्गाय नमः।खड्ग श्रीपादुकां पूजयामि तर्पयामि नमः। वरुण समीपे—ॐ पां पाशाय नमः। पाश श्रीपादुकां पूजयामि तर्पयामि नमः।वायु समीपे—ॐ अं अंकुशाय नमः। अंकुश श्रीपादुकां पूजयामि तर्पयामि नमः। सोम समीपे—ॐ गं गदाय नमः। गदा श्रीपादुकां पूजयामि तर्पयामि नमः। ईशान समीपे—ॐ शूं शूलाय नमः।शूल श्रीपादुकां पूजयामि तर्पयामि नमः। ब्रह्मणे समीपे—ॐ पं पद्माय नमः।पद्म श्रीपादुकां पूजयामि तर्पयामि नमः।अनन्त समीपे—ॐ चं चक्राय नमः।चक्र श्रीपादुकां पूजयामि तर्पयामि नमः।इति पूजयेत्।

ॐ अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम्।।

इति मन्त्रेण पुष्पाञ्जलिं दद्यात्।

द्वितीयावरणदेवताभ्यो नमः।( समस्तावरणदेवताभ्यो नमः )पुष्पाञ्जलिं समर्पयामि। अनया पूजया समस्तावरणदेवताः प्रीयन्तां न मम।

धूपम्

ॐ ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्याᳬ शूद्रोऽ अजायत॥
दशाङ्गगुग्गुलं धूपं चन्दनागुरुसंयुतम्।
समर्पितं मया भक्त्या महादेवि प्रगृह्यताम्॥
श्रीधूमावत्यै नमः, धूपमाघ्रापयामि।

दीपम्

ॐ चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत॥
घृतवर्तिसमायुक्तं महातेजो महोज्ज्वलम्।
दीपं दास्यामि देवेशि सुप्रीता भव सर्वदा॥
श्रीधूमावत्यै नमः, दीपं दर्शयामि। हस्त प्रक्षालनम्।

नैवेद्यम्

ॐ नाभ्या आसीदन्तरिक्षᳬ शीर्ष्णो द्यौः समवर्तत।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ २॥ अकल्पयन्॥
अन्नं बहुविधं स्वादु रसैः षड्भिः समन्वितम्।
नैवेद्यं गृह्यतां देवि भक्तिं मे ह्यचलां कुरु॥
श्रीधूमावत्यै नमः, नैवेद्यं निवेदयामि। मध्ये आचमनीयं जलं समर्पयामि।
उत्तरापोशनार्थे पुनर्नैवेद्य निवेदयामि। हस्तप्रक्षालनार्थे मुखप्रक्षालनार्थे च जलं समर्पयामि। पुनराचमनीयं जलं समर्पयामि।

करोद्वर्त्तनम्

ॐ अᳬ शुनाते अᳬ शुः पृच्यतां परुषापरुः।
गन्धस्ते सोममवतु मदाय रसो अच्युतः॥

करोद्वर्त्तनकं देवि! सुगन्धैः परिवासितैः।
गृहीत्वा मे वरं देहि परत्र च परां गतिम्॥
श्रीधूमावत्यै नमः, करोद्वर्त्तनार्थे गन्धं समर्पयामि।
हस्तप्रक्षालनार्थं जलं समर्पयामि।

ऋतुफलम्

ॐ याः फलिनीर्या अफला अपुष्यायाश्च पुष्पिणीः।
बृहस्पतिप्रसूतास्तानो मुञ्चन्त्वठं० हसः॥
नारिकेलं च नारिङ्गं कलिङ्गं मञ्जिरं तथा।
उर्वारुकं च देवेशि फलान्येतानि गृह्यताम्॥
श्रीधूमावत्यै नमः, ऋतुफलं समर्पयामि।

ताम्बूलम्

ॐ यत्पुरुषेण हविषा देवा यज्ञमतन्वत।
वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः॥
एला-लवङ्ग-कस्तूरी-कर्पूरैः पुष्पवासिताम्।
वीटिकां मुखवासार्थमर्पयामि परमेश्वरि॥
श्रीधूमावत्यै नमः, मुखवासार्थं ताम्बूलं
(पूगफल-एला-लवङ्गसहितम्) समर्पयामि।

दक्षिणाम्

ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥
पूजाफलसमृद्ध्यर्थं तवाग्रे परमेश्वरि।
अर्पितं तेन मे प्रीता पूर्णान् कुरु मनोरथान्॥
श्रीधूमावत्यै नमः, दक्षिणां समर्पयामि।

नीराजनम्

ॐ इदर्ठ० हविः प्रजननं मे अस्तु दशवीरर्ठ० सर्वगणर्ठ० स्वस्तये। आत्मसनि प्रजासनि पशुसनि लोकसन्यभयसनि। अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धत्त॥ १॥

ॐ आ रात्रि पार्थिवर्ठ० रजः पितुरप्रायि धामभिः। दिवः सदार्ठ०सि बृहती वितिष्ठस आ त्वेषं वर्तते तमः॥ २॥

कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम्।
सदा वसन्तं हृदयारविन्दे भवं भवानीसहितं नमामि॥

श्रीधूमावत्यै नमः, नीराजनं समर्पयामि।

मन्त्रपुष्पाञ्जलिम्

ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥

ॐ राजाधिराजाय प्रसह्य साहिने। नमो वयं वैश्रवणाय कुर्महे। स मे कामान् कामकामाय मह्यम्। कामेश्वरो वैश्रवणो ददातु। कुबेराय वैश्रवणाय महाराजाय नमः॥ ॐ स्वस्ति! साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यमयं समन्तपर्यायी स्यात्, सार्वभौमः सार्व्वायुष आन्तादापरार्धात्, पृथिव्यै समुद्रपर्यन्ताया एकराडिति॥ तदप्येष श्लोकोऽभिगीतो मरुतः परिवेष्टारो मरुत्तस्यावसन् गृहे। आविक्षितस्य कामप्रेर्विश्वेदेवाः सभासद इति॥

ॐ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्।
सं बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन् देव एकः॥

नानासुगन्धिपुष्पाणि यथाकालोद्भवानि च।
पुष्पाञ्जलिर्मयादत्तो गृहाण परमेश्वरि!॥

ॐ धूमावत्यै च विद्महे संहारिण्यै च धीमहि। तन्नो धूमा प्रचोदयात्।

श्रीधूमावत्यै नमः, मन्त्रपुष्पाजलिं समर्पयामि।

प्रदक्षिणाम्

ॐ ये तीर्थानि प्रचरन्ति सृकाहस्ता निषङ्गिणः।
तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि॥

यानि कानि च पापानि जन्मान्तरकृतानि च।
तानि तानि प्रणश्यन्ति प्रदक्षिणपदे पदे॥

श्रीधूमावत्यै नमः, प्रदक्षिणां समर्पयामि।

स्तुतिः

कल्पादौ या कालिकाद्याऽचीकलन्मधुकैटभौ।
कल्पान्ते त्रिजगत्सर्वं धूमावतीं भजामि ताम्॥ १॥
गुणागाराऽगम्यगुणा या गुणागुणवर्धिनी।
गीता वेदार्थतत्त्वज्ञैर्धूमावतीं भजामि ताम्॥ २॥
खट्वाङ्गधारिणी खर्वाखण्डिनी खलरक्षसाम्।
धारिणी खेटकस्यापि धूमावतीं भजामि ताम्॥ ३॥
घूर्णघूर्णकरा घोरा घूर्णिताक्षी घनस्वना।
घातिनी घातकानां या धूमावतीं भजामि ताम्॥ ४॥
चर्वन्तीमस्थिखण्डानां चण्ड-मुण्डविदारिणीम्।
चण्डाट्टहासिनीं देवीं भजे धूमावतीमहम्॥ ५॥
छिन्नग्रीवां क्षताच्छन्नां छिन्नमस्तस्वरूपिणीम्।
छेदिनीं दुष्टसङ्घानां भजे धूमावतीमहम्॥ ६॥
जाता या याचिता देवैरसुराणां विघातिनी।
जल्पन्ती बहु गर्जन्ती भजे तां धूम्ररूपिणीम्॥ ७॥

श्रीधूमावत्यै नमः, स्तुतिं समर्पयामि।

॥ इति धूमावतीपूजनम्॥

## पूजनसामग्रीदानम्

नामकरणसंस्कारोपरान्ते—ततः—धूमावतीदेवतायाः करिष्यमाण-नित्यपूजोपकरणानि वस्त्रम्, ताम्रकलशम्, शङ्खम्, धूप-दीप-नैवेद्य-पात्राणि, पुष्पपात्रम्, ताम्बूलपात्रम्, आसनम्, पादुके, ग्रैवेयकम्, करचरण-भूषणादिकम्, नित्यपूजोत्सवभोगरागाद्यर्थं ग्रामक्षेत्रद्रव्यादिकं, घण्टां, व्यजनं, उपधानादिसामग्रीसहितां शय्यां च देवोद्देशेनोत्सृजेत्।

## शान्त्यादिहोमः

आचार्य और ब्राह्मण सर्वशान्ति के लिए निम्न मंत्र का उच्चारण करते हुए यजमान से एक सौ आठ बार कुण्ड में गौ-घृत से हवन करावें—**ॐ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः। सर्व्वेभ्यः सर्वशर्व्वेभ्यो नमस्ते ऽअस्तु रुद्ररूपेभ्यः स्वाहा॥**

## अग्निपूजनम्

आचार्य और ब्राह्मण निम्न वैदिक मंत्र और वाक्य का उच्चारण करते हुए यजमान से अग्निदेवता का पूजन करावें—

**ॐ अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान्। युधोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम॥**

वाक्य—**ॐ स्वाहा—स्वधायुताग्नये वैश्वानराय नमः। इत्यने-नाऽग्निं सम्पूजयेत्।**

## स्विष्टकृद्धवनम्

यजमान और उसकी धर्मपत्नी को खड़ा करवाके आचार्य बचे हुए शाकल का हवन निम्न वाक्य का उच्चारण करवाके कुण्ड में करावें—**ॐ अग्नये स्विष्टकृते स्वाहा।**

यजमान निम्न वाक्य का उच्चारण करके स्रुव में बचे हुए घृत को प्रोक्षणीपात्र में छोड़ दे—**इदमग्नये स्विष्टकृते न मम।**

## भूरादिनवाहुतिः

आचार्य और ब्राह्मण निम्न नाम मन्त्रों और मन्त्रों का उच्चारण करते हुए यजमान से कुण्ड में आहुति प्रदान करावें—

ॐ भूः स्वाहा— इदमग्नये न मम।

ॐ भुवः स्वाहा—इदं वायवे न मम।

ॐ स्वः स्वाहा—इदं सूर्याय न मम।

ॐ त्वं नो अग्ने वरुणस्य विद्वान्देवस्य हेडो अवयासिसीष्ठाः। यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत् स्वाहा॥ इदमग्नीवरुणाभ्यां न मम॥

ॐ स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ। अवयक्ष्व नो वरुणꣳ रराणो वीहि मृडीकꣳ सुहवो न एधि स्वाहा॥ इदमग्नीवरुणाभ्यां न मम॥

ॐ अयाश्चाग्नेऽस्यनभिशस्तिपाश्च सत्यमित्वमया असि। अया नो यज्ञं वहास्यया नो धेहि भेषजꣳ स्वाहा॥ इदमग्नये अयसे न मम॥

ॐ ये ते शतं वरुण ये सहस्त्रं यज्ञियाः पाशा वितता महान्तः। ते भिर्नो अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्क्काः स्वाहा॥ इदं वरुणाय सवित्रे विष्णावे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम॥

ॐ उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय। अथा वयमादित्य व्रते तवानागसो अदितये स्याम स्वाहा॥ इदं वरुणायादित्यादितये न मम॥

ॐ प्रजापतये स्वाहा, इदं प्रजापतये न मम॥

## बलिदानम्

यजमानः दक्षिणहस्ते जलाऽक्षत-द्रव्यं चादाय, सङ्कल्पं कुर्यात्— देशकालौ संकीर्त्य, अस्य कृतस्य सप्रासादधूमावतीप्रतिष्ठाकर्मणः साङ्गतासिद्ध्यर्थं सदीपमाषभक्तबलिदानं पायसबलिदानं वा करिष्ये।

वास्तुदेवानां पूर्वं बलिर्न कृतश्चेदत्र कुर्यात्। वस्तुतस्तु वास्तुदेवताभ्योऽत्रैव बलिदानं युक्तम्, पूर्वं मयूखादावनुक्तत्वात्। स चेत्थम्—'शिखिने एव पायसबलिर्नमः। इत्येवं तत्तन्नाम्ना बलिं दद्यात्। यद्वाशिरव्यादिवास्तुदेवताभ्यो नमः' अमुं पायसबलिं समर्पयामि। भो! वास्तुदेवता पायसबलिं गृह्णीत मम सकुटुम्बस्य सपरिवारस्य आयुः कर्त्र्यः क्षेमकर्त्र्यः शान्तिकर्त्र्यः पुष्टिकर्त्र्यः तुष्टिकर्त्र्यः वरदा भवत। अनेन बलिदानेन वास्तुदेवताः प्रीयन्ताम्। ततः—'वास्तोष्पत्यन्तेभ्यः सूर्यादिग्रहेभ्यो नमः' पायसबलिं समर्पयामि। भो! भो! वास्तोष्पत्यन्ताः सूर्यादिग्रहाः पायसबलिं गृह्णीत मम यजमानस्य अनेन बलिदानेन वास्तोष्पत्यन्ताः सूर्यादिग्रहाः प्रीयन्ताम्।

सतिसम्भवे—ॐ ब्रह्मादिमण्डलदेवताभ्यो नमः। ॐ योगिनीभ्यो नमः। ॐ क्षेत्रपालेभ्यो नमः माषभक्तबलिं समर्पयामि। भो! भो! ब्रह्मादिमं० भो! भो! योगिनीदेवताः भो! भो! क्षेत्रपालदेवताः मम सकुटुम्बस्य सपरिवारस्य आयुःकर्तारः, पुष्टिकर्तारः, तुष्टिकर्तार, वरदा भवत। अनेन बलिदानेन०।

## क्षेत्रपालबलयः

संकल्पः—देशकालौ सङ्कीर्त्य, अमुकगोत्रोऽमुकशर्माहम् ( वर्माऽहम्, गुप्तोऽहम्, दासोऽहम् ) सपत्नीकोऽहं अस्य सप्रासादधूमावतीप्रतिष्ठाकर्मणः साङ्गतासिद्ध्यर्थं क्षेत्रपालादिप्रीत्यर्थं भूत-प्रेत-पिशाचादिनिवृत्यर्थं च सार्वभौतिकबलिप्रदानं करिष्ये।

एक बाँस आदि के पात्र में कुशों को बिछाकर उनके ऊपर मनुष्य के आहार के चौगुना अथवा दोगुना अथवा दही, उड़द और जलपात्र रखकर चतुर्मुख दीप जलाकर निम्न मन्त्र का उच्चारण करें—

ॐ नहि स्पशमविदन्नन्यमस्माद्वैश्वानरात्पुरएतारमग्नेः। एमेनमवृधन्नमृता अमर्त्यं वैश्वानरं क्षैत्रजित्याय देवाः॥

**'ॐ क्षेत्रपालाय नमः'** यह कहकर क्षेत्रपाल की षोडशोपचार अथवा पञ्चोपचार से पूजा करके निम्न श्लोकों का उच्चारण करके प्रार्थना करें—

नमो वै क्षेत्रपालस्त्वं भूतप्रेतगणैः सह।
पूजां बलिं गृहाणेमं सौम्यो भव च सर्वदा॥
पुत्रान् देहि धनं देहि सर्वान् कामांश्च देहि मे।
आयुरारोग्यं मे देहि निर्विघ्नं कुरु सर्वदा॥

यजमान अपने दाहिने हाथ में जल लेकर कहे—क्षेत्रपालाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय मारीगण-भैरव-राक्षस-कूष्माण्ड-वेताल-भूत-प्रेत-पिशाच-डाकिनी-शाकिनी-पिशाचिनी-ब्रह्मराक्षस-गणसहिताय इमं कुङ्कुम-रक्तपुष्पादियुतं सदीपं सताम्बूलं सदक्षिणं दधि-माष-भक्तबलिं समर्पयामि। भोः क्षेत्रपाल! सर्वतो दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य आयुः कर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता वरदो भव। अनेन बलिदानेन क्षेत्रपालः प्रीयताम्।

बलिं गृहणन्त्विमे देवा आदित्या वसवस्तथा।
मरुतश्चाश्विनौ रुद्राः सुपर्णाः पन्नगाः खगाः (नगाः)॥ १॥
असुरा यातुधानाश्च पिशाचोरगरक्षसाः।
डाकिन्यो यक्षवेताला योगिन्यः पूतनाः शिवाः॥ २॥
जृम्भकाः सिद्धगन्धर्वाः सौम्या विद्याधरानगाः।
दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः॥ ३॥
जगतां शान्तिकर्तारो ब्रह्माद्याश्च महर्षयः।
मा विघ्नं मा च मे पापं मा सन्तु परिपन्थिनः॥
सौम्या भवन्तु तृप्ताश्च भूत-प्रेताः सुखावहाः॥ ४॥
भूतानि यानीह वसन्ति तानि बलिं गृहीत्वा विधिवत्प्रयुक्तम्।
अन्यत्र वासं परिकल्पयन्तु रक्षन्तु मां तानि सदैव चात्र॥ ५॥

इसके बाद नापित अपने दोनों हाथों में क्षेत्रपाल की बलि को लेकर यजमान के मस्तक पर से घुमाकर चौराहे पर रख दे और वापस आकर अपने हाथ-पैर जल से धो ले। तदुपरान्त आचार्य यजमान के मस्तक पर दूर्वा के द्वारा निम्न मंत्र का उच्चारण करते हुए जल छिड़कें—

**ॐ हिङ्काराय स्वाहा हिङ्कृताय स्वाहा क्रन्दते स्वाहा वक्क्रन्दाय स्वाहा प्रोथते स्वाहा प्रप्रोथाय स्वाहा गन्धाय स्वाहा घ्राताय स्वाहा निविष्ट्राय स्वाहो पविष्ट्राय स्वाहा सन्दिताय स्वाहा वल्गते स्वाहासीनाय स्वाहा शयानाय स्वाहा स्वपते स्वाहा जाग्रते स्वाहा कूजते स्वाहा प्रबुद्धाय स्वाहा विजृम्भमाणाय स्वाहा विचृत्ताय स्वाहासर्ठ० हानायस्वाहोपस्स्थिताय स्वाहा ऽयनाय स्वाहा प्रायणाय स्वाहा॥**

## पूर्णाहुतिः

यजमान हाथ-पैर धोकर आचमन करके प्राणायाम करे और प्रज्वलित कुण्ड के पास आकर बैठे। उस समय आचार्य निम्न संकल्प यजमान से करावें—**देशकालौ सङ्कीर्त्य, अद्य पुण्यतिथौ सप्रासादधूमावती-प्रतिष्ठाकर्मणः साङ्गतासिद्ध्यर्थं मृडनामाग्नौ पूर्णाहुतिं होष्ये।**

**ॐ समुद्रादूर्मिर्मधुमाँ२॥ उदारदुपार्ठ०शुना सममृतत्वमानट्। घृतस्य नाम गुह्यं य्यदस्ति जिह्वा देवानां मृतस्य नाभिः॥ १॥**

**वयं नाम प्रब्रवामा घृतस्यास्मिन् य्यज्ञे धारयामा नमोभिः। उप ब्रह्मा श्रृणवच्छस्यमानं चतुः श्रृङ्गोऽवमीद्गौर एतत्॥ २॥**

**चत्वारि श्रृङ्गा त्रयो ऽअस्य पादा द्वे शीर्षे सप्त हस्तासो ऽअस्य। त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्त्याँ २॥ आविवेश॥ ३॥**

**त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्न्वविन्दन्। इन्द्र ऽएकर्ठ० सूर्य्य ऽएकं जजान वेनादेकर्ठ० स्वधया निष्टतक्षुः॥ ४॥**

**एता ऽअर्षन्ति हृद्यात्समुद्राच्छतव्रजा रिपुणा नावचक्षे। घृतस्य धारा ऽअभिचाकशीमि हिरण्ययो व्वेतसो मध्य ऽआसाम्॥ ५॥**

**सम्यक् स्त्रवन्ति सरितो न धेना ऽअन्तर्हृदा मनसा पूयमानाः। एते अर्षन्त्यूर्मयो घृतस्य मृगा ऽइव क्षिपणोरीषमाणाः॥ ६॥**

सिन्धोरिव प्राद्ध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः। घृतस्य धारा अरुषो न वाजी काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः॥ ७॥

अभिप्रवन्त समनेव योषाः कल्याण्यः स्मयमानासोऽअग्निम्। घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्य्यति जातवेदाः॥ ८॥

कन्न्या इव वहतुमेतवा ऽउ ऽअञ्ज्यञ्जाना ऽअभिचाकशीमि। यत्र सोमः सूयते यत्र यज्ञो घृतस्य धारा ऽअभि तत्पवन्ते॥ ९॥

अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त। इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत्पवन्ते॥ १०॥

धामं ते विश्श्वं भुवनमधि श्रितमन्तः समुद्रे हृद्यन्तरायुषि। अपामनीके समिथे य ऽआभृतस्तमश्याम मधुमन्तं त ऊर्मिम्॥ ११॥

पुनस्त्वाऽऽदित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः। घृतेन त्वं तन्वं वर्द्धयस्व सत्त्याः सन्तु यजमानस्य कामाः॥ १२॥

मूर्धानं दिवो ऽअरतिं पृथिव्या वैश्वानरमृत ऽआ जातमग्निम्। कविर्ठ० सम्म्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः॥ १३॥

पूर्णा दर्वि परापत सुपूर्ण्णा पुनरापत। वस्नेव विक्रीणावहा ऽइषमूर्जर्ठ० शतक्रतो॥ १४॥

इदमग्नये वैश्वानराय वसुरुद्रादित्येभ्यः शतक्रतवे सप्तवते अग्नये अद्भ्यश्च न मम।

## वसोर्द्धाराहवनम्

यजमानः स्वदक्षिणहस्ते जलाऽक्षत-द्रव्यं चादाय, सङ्कल्पं कुर्यात्—देशकालौ संकीर्त्य, अमुकगोत्रः अमुकशर्माऽहम् ( वर्माऽहम्, गुप्तोऽहम्, दासोऽहम् ) सपत्नीकोऽहं कृतस्य सप्रासादधूमावतीप्रतिष्ठा-कर्मणः साङ्गतासिद्ध्यर्थं तत्सम्पूर्णफलप्राप्त्यर्थं वसोर्द्धारां होष्यामि।

ॐ सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त ऋषयः सप्त धाम प्रियाणि। सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्व घृतेन स्वाहा॥ १॥

शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्माँश्चा शुक्रश्च ऋतपाश्चात्यर्ठ० हाः ॥ २ ॥

ईदृङ् चान्यादृङ् च सदृङ् च प्रतिसदृङ् च। मितश्च संमितश्च सभराः ॥ ३ ॥

ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च। धर्त्ता च विधर्त्ता च विधारयः ॥ ४ ॥

ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेणश्च। अन्तिमित्रश्च दूरे ऽअमित्रश्च गणः ॥ ५ ॥

ईदृक्षास ऽएतादृक्षासऽऊषणुः सदृक्षासः प्रतिसदृक्षास एतन। मितासश्च संमितासो नो ऽअद्य सभरसो मरुतो यज्ञे ऽअस्मिन् ॥ ६ ॥

स्वतवांश्च प्रघासी च सान्तपनश्च गृहमेधी च। क्रीडी च शाकी चोज्जेषी ॥ ७ ॥

इन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन्यथेन्द्रं दैवीर्विशो मरुतोऽनु-वर्त्मानोऽभवन्। एवमिमं यजमानं दैविश्च विशो मानुषीश्चानुवर्त्मानो भवन्तु ॥ ८ ॥

इमर्ठ० स्तनमूर्जस्वन्तं धयापां प्रपीनमग्ने सरिरस्य मद्ध्ये। उत्सं जुषस्व मधुमन्तमर्वन्समुद्रियर्ठ० सदनमाविशस्व ॥ ९ ॥

घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम। अनुष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम् ॥ १० ॥

व्वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम्। देवस्त्वा सविता पुनातु व्वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः स्वाहा ॥ ११ ॥

ॐ इदमग्नये वैश्वानराय न मम।

## अग्नि प्रदक्षिणाः

आचार्य आगे दिए हुए मन्त्र का उच्चारण करते हुए यजमान से अग्निदेवता की प्रदक्षिणा करावें—

ॐ अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान्।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम॥

आचार्य पश्चिम दिशा की ओर आसन पर बैठकर निम्न पौराणिक श्लोकों का उच्चारण करते हुए यजमान से अग्निदेवता की प्रार्थना करावें—

सप्तहस्तश्चतुःशृङ्गः सप्तजिह्वो द्विशीर्षकः।
त्रिपात्प्रसन्नवदनः सुखासीनः शुचिस्मितः॥
मेषारूढो जटाबद्धो गौरवर्णो महौजसः।
धूम्रध्वजो लोहिताक्षः सप्तार्चिः सर्वकामदः॥
शिखाभिर्दीप्यमानाभिरूर्ध्वगाभिस्तु संयुतः।
स्वाहां तु दक्षिणे पार्श्वे देवीं वामे स्वधां तथा॥
विभ्रद्दक्षिणहस्तैस्तु शक्तिमन्नं स्रुचं स्रुवम्।
तोमरं व्यजनं वामे घृतपात्रं च धारयन्॥
आत्माभिमुखमासीन एवंरूपो हुताशनः॥

## हवनीयकुण्डभस्मधारणम्

तत आचार्यः हवनकुण्डस्य ईशानकोणात् श्रुवेण भस्मानीय प्रथमं स्वशरीरे ततो यजमानशरीरे च भस्मानुलेपनं कुर्यात्। 'ॐ त्र्यायुषं जमदग्नेः' इति ललाटे। 'कश्यपस्य त्र्यायुषम्' इति ग्रीवायाम्। 'यद्देवेषु त्र्यायुषम्' इति दक्षिणबाहुमूले। 'तन्नो ऽअस्तु त्र्यायुषम्' इति हृदि।

तदुपरान्त प्रोक्षणीपात्र में स्थित घृत को यजमान सूँघे और दो बार आचमन करके प्रणीतापात्र में रक्खी हुई पवित्री से प्रणीता जल को अपने मस्तक पर छिड़के और उन दोनो कुशाओं को अग्नि में परित्याग कर दे।

## ब्रह्मणे पूर्णपात्रदानम्

यजमानः स्वदक्षिणहस्ते जलाऽक्षत-द्रव्यं चादाय, सङ्कल्पं कुर्यात्—देशकालौ संकीर्त्य, अमुकगोत्रः अमुकशर्माऽहम् ( वर्माऽहम्, गुप्तोऽहम्,

दासोऽहम्) अस्य सप्रासादधूमावतीप्रतिष्ठाकर्मणः साङ्गतासिद्ध्यर्थं तत्सम्पूर्णफलप्राप्तये च इदं पूर्णपात्रं सदक्षिणं ब्रह्मणे तुभ्यमहं सम्प्रददे।

यजमान संकल्प करके ब्रह्मा को पूर्णपात्र प्रदान करे और ब्रह्मा इस वाक्य का उच्चारण करे—ॐ द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु।

## अवभृथस्नानम्

यजमानः पूर्णाहुत्यनन्तरं पूर्णपात्रादिदानानन्तरं प्रधानवेद्युपरि स्थापितं प्रधानकलशं, हवनकुण्डाद् बहिः पतितं हवनीयद्रव्यं स्रुक्स्रुवादियज्ञपात्रं पूजनसामग्रीं च गृहीत्वा वेदमन्त्रोच्चारण—भगवन्नामकीर्त्तन-वाद्यघोष-पुरस्सरं आचार्यादिऋत्विग्भिः नगरवासिभिश्च सह नदीं जलाशयं वा गच्छेत्। अर्धमार्गोपरि क्षेत्रपालं सम्पूज्य क्षेत्रपालाय बलिं दद्यात्। नदीं जलाशयं वा गत्वा आचार्यादय ऋत्विजः स्वस्तिवाचनं कुर्युः। पश्चाद् यजमानः सङ्कल्पं कुर्यात्। तद्यथा—मम सर्वेषां परिवाराणां तथाऽन्येषां समुपस्थितानां जनानाञ्च सर्वविध-कल्याणपूर्वकं धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा श्रीपरमेश्वर-प्रीतिपूर्वकं च कृतस्य सप्रासादधूमावतीप्रतिष्ठाकर्मणः सांगतासिद्ध्यर्थं तत्सम्पूर्णफलप्राप्त्यर्थं च पुण्यकालेऽस्मिन् अस्यां नद्यां जलाशये वा मांगलिकावभृथस्नानं समस्तसमुपस्थितजनैः सहाहं करिष्ये।

अनन्तरं नद्यां जलाशये वा जलमातृणामावाहनं पूजनं च कुर्यात्। तद्यथा—ॐ भूर्भुवः स्वः मत्स्यै नमः, मत्सीमावाहयामि स्थापयामि। ॐ भूर्भुवः स्वः कूर्म्यै नमः, कूर्मीमावाहयामि स्थापयामि। ॐ भूर्भुवः स्वः वाराह्यै नमः, वाराहीमावाहयामि स्थापयामि। ॐ भूर्भुवः स्वः दर्दुर्यै नमः, दर्दुरीमावाहयामि स्थापयामि। ॐ भूर्भुवः स्वः मकर्यै नमः, मकरीमावाहयामि स्थापयामि। ॐ भूर्भुवः स्वः जलूक्यै नमः, जलूकीमावाहयामि स्थापयामि। ॐ भूर्भुवः स्वः तन्तुक्यै नमः, तन्तुकीमावाहयामि स्थापयामि। ततो वरुणदेवतामावाहयेत्—

आगच्छ जलदेवेश जलनाथ पयस्पते।
तव पूजां करिष्यामि कुम्भेऽस्मिन् सन्निधिं कुरु॥

इत्यावाह्य सम्पूज्य च—

श्वेताभ्र शिखिराकार सर्वभूतहिते रतः।
गृहाणार्घ्यमिमं देव जलनाथ नमोऽस्तु ते॥

इति विशेषार्घ्यं दद्यात्। ततः—

ॐ इमं मे वरुण श्रुधी हवमद्या च मृडय। त्वामस्युराचके॥१॥
तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः।
अहेडमानो वरुणेह बोध्युरुशर्ठ० समान आयुः प्रमोषीः॥२॥
त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेडो अवयासिसीष्ठाः।
यजिष्ठो बह्नितमर्ठ० शोशुचानो विश्वा द्वेषार्ठ०सि प्रमुमुग्ध्यस्मत्॥३॥
सत्वन्नो अग्नेऽवमो भवोती नेदिष्ठो अस्या ऽउषसो व्युष्टौ।
अव यक्ष्वनो वरुणर्ठ० रराणो वीहि मृडीकर्ठ० सुहवो नऽएधि॥४॥
मापो मौषधीर्हिर्ठ० सीर्द्धाम्नो धाम्ना राजँस्ततो वरुण नो मुञ्च।
यदाहुरघ्न्या ऽइति वरुणओत शपामहे ततो वरुण नो मुञ्च॥५॥
उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमर्ठ० श्रथाय।
अथा वयमादित्य व्रते तवानागसो अदितये स्याम॥६॥
मुञ्चन्तु मा शपथ्यादथो वरुण्यादूत।
अथो यमस्य षड्वीशात् सर्वस्माद्देवकिल्विषात्॥७॥
अवभृथ निचुं पुण निचेरुरसि निचुं पुणः।
अव देवैर्देवकृतमेनो यासिषमवमर्त्त्यैमर्त्त्यकृतं पुरुराब्णो देवरिषस्पाहि॥८॥

इति मन्त्रैः सम्प्रार्थ्य स्रुवरेखया तीर्थप्रकल्पनं कुर्यात्—

ब्रह्माण्डोदरतीर्थानि चाकृष्याङ्कुशमुद्रया।
तेन सत्येन मे देव तीर्थं देहि दिवाकर॥

इति रज्वादिना परितश्चतुरस्त्रं स्नानार्थं व्यवस्थां प्रकल्पयेत्। ततः—

ॐ पञ्च नद्यः सरस्वतीमपियन्ति सस्रोतसः।
सरस्वती तु पञ्चधा सो देशेऽभवत्सरित्॥

इति मन्त्रेण गङ्गां नदीं जलाशयं वा सम्पूज्य ततो लाजादिना जीवमातृणां बलिं दद्यात् तद्यथा—ॐ भूर्भुवः स्वः कुमार्यै नमः। ॐ भूर्भुवः स्वः धनदायै नमः। ॐ भूर्भुवः स्वः नन्दायै नमः। ॐ भूर्भुवः स्वः विमलायै नमः। ॐ भूर्भुवः स्वः मङ्गलायै नमः। ॐ भूर्भुवः स्वः अचलायै नमः। ॐ भूर्भुवः स्वः पद्मायै नमः।

पश्चाद् धूमावतीप्रतिष्ठायागे पुरुषसूक्तेन च जले अभिषेकः कार्यः ततो होमावसरे हवनकुण्डाद् बहिः पतितं हवनीयद्रव्यं नद्यां जलाशये वा तूष्णीं प्रक्षिपेत्। ततो जले—'वडवाग्निरूपायाग्नये नमः' इतिमन्त्रेण षोडशोपचारैः पञ्चोपचारैर्वा सम्पूज्य द्वादश आज्याहुतीन् जुहुयात्। तद्यथा—

१. ॐ अद्भ्यः स्वाहा, इदमद्भ्यो न मम॥ २. ॐ वार्भ्यः स्वाहा, इदं वार्भ्यो न मम॥ ३. ॐ उदकाय स्वाहा, इदमुदाय न मम॥ ४. ॐ तिष्ठन्तीभ्यः स्वाहा, इदं तिष्ठन्तीभ्यो न मम॥ ५. ॐ स्रवन्तीभ्यः स्वाहा, इदं स्रवन्तीभ्यो न मम॥ ६. ॐ स्यन्दमानाभ्यः स्वाहा, इदं स्यन्दमानाभ्यो न मम॥ ७. ॐ कूप्याभ्यः स्वाहा, इदं कूप्याभ्यो न मम॥ ८. ॐ सूद्याभ्यः स्वाहा, इदं सूद्याभ्यो न मम॥ ९. ॐ धार्याभ्यः स्वाहा, इदं धार्याभ्यो न मम॥ १०. ॐ अर्णवाय स्वाहा, इदमर्णवाय न मम॥ ११. ॐ समुद्राय स्वाहा, इदं समुद्राय न मम॥ १२. ॐ सरिराय स्वाहा, इदं सरिराय न मम॥ ततो यजमानः सम्पूजितेन प्रधानकलशोदकेन—

ॐ इमं मे वरुण श्रुधी हवमद्या च मृडय। त्वामवस्युराचके॥ १॥
तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः।
अहेडमानो वरुणेह बोद्ध्युरुशर्ठ० स मा नऽआयुः प्रमोषीः स्वाहा॥ २॥
त्वन्नो ऽअग्ने वरुणस्य विद्वान्देवस्य हेडो अव यासिसीष्ठाः।
यजिष्ठो वह्नितमः शोशुचानो विश्श्वा द्वेषार्ठ०सि प्र मुमुग्ध्यस्मत्॥ ३॥

स त्वं नो अग्ने वमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ।
अवयक्ष्व नो वरुणर्ठ० रराणो वीहि मृडीकः सुहवो न ऽएधि॥४॥
उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमर्ठ० श्रथाय।
अथा वयमादित्य व्रते तवानागसो अदितये स्याम॥५॥
इति वारुणमन्त्रैः स्नानं कुर्यात्। प्रधानकलशोदकेन कुशैः दूवाङ्कुरैश्च अन्येषां जनानां सम्मार्जनं कारयेत्। पश्चाद् यजमानः प्रतिष्ठाकुण्डादानीतेन भस्मना स्रुचिस्थितेन आज्येन च स्वशरीरे अनुलेपनं कृत्वा नद्यां जलाशये वा स्नानं कुर्यात्। स्नानानन्तरं नूतनवस्त्राणि परिधाय तिलकाद्यलङ्करणं कुर्यात्। ततो यजमानः—

ॐ हर्ठ० सः शुचिषद् वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्॥

इति मन्त्रेण सूर्योपस्थानं कृत्वा तीर्थदेवतां सम्पूज्य प्रार्थयेत्—

ॐ हिरण्यशृङ्गोऽयो अस्य पादा मनोजवा अवर इन्द्र आसीत्।
देवा इदस्य हविरद्यमायन्यो अर्वन्तं प्रथमो अध्यतिष्ठत्॥१॥
ईर्मान्तासः सिलिकमध्यमासः सर्ठ०शूरणासो दिव्यासो अत्याः।
हर्ठ०सा इव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः॥२॥
तव शरीरं पतयिष्ण्वर्वन् तव चित्तं वात इव ध्रजीमान्।
तव शृङ्गाणि विष्ठिता पुरुत्रारण्येषु जर्भुराणा चरन्ति॥३॥

तदुपरान्त आचार्य और ब्राह्मणों को दक्षिणा देकर प्रधानकलश और पूजासामग्री को लेकर यजमान धूमावती देवी का कीर्तन करते हुए आचार्य और ब्राह्मणों के साथ प्रतिष्ठास्थल पर आकर हाथ और पैर धोकर प्रासाद की प्रदक्षिणा कर मण्डप के पूर्व द्वार से प्रवेश करे। प्रधान कलश को प्रधान वेदी पर स्थापित कर धूमावती देवी की प्रतिष्ठा के अवशिष्ट कर्म को करे।

## श्रेयोदानम्

कृतस्य सप्रासादधूमावतीप्रतिष्ठाकर्मणः साङ्गतासिद्ध्यर्थं तत्-सम्पूर्णफलप्राप्त्यर्थं च यजमानाय श्रेयोदानं करिष्ये। इति सङ्कल्प्य 'शिवा आपः सन्तु' इति यजमानदक्षिणहस्ते जलं दद्यात्। सौमनस्यमस्तु इति पुष्पं दद्यात्। अक्षतं चारिष्टं चास्तु इति अक्षतान् दद्यात्।

ततो आचार्यः हस्ते जलाक्षतपूगीफलमादाय भवन्नियोगेन मया अस्मिन् सप्रासादधूमावतीप्रतिष्ठाकर्मणि यत्कृतम् आचार्य त्वं तथा च एभिर्ब्रह्मगाणपत्यसदस्योपद्रष्टजापकादिभिर्ब्राह्मणैः सह यत्कृतं हवनादिकं च तेनोत्पन्नं यच्छ्रेयस्तत् साक्षतेन सजलेन पूगीफलेन तुभ्यमहं सम्प्रददे, तेन श्रेयसा त्वं श्रेयस्वान् भव।

आचार्य यह कहकर यजमान को फल आदि दे और यजमान '**भवामि**' इस वाक्य का उच्चारण कर उसे ग्रहण करे।

## दक्षिणासङ्कल्पः

संकल्पः—देशकालौ संकीर्त्य, अमुकगोत्रः अमुकशर्माऽहम् (वर्माऽहम्, गुप्तोऽहम्, दासोऽहम्) अस्य सप्रासादधूमावतीप्रतिष्ठा-कर्मणः साङ्गतासिद्ध्यर्थं तत्सम्पूर्णफलप्राप्त्यर्थं आचार्यादिभ्यो, महर्त्विग्भ्यः, सूक्तपाठकेभ्यो, मन्त्रजापकेभ्यो, हवनकर्तृभ्यो, अन्येभ्यो देवयजन-मागतेभ्यश्च दक्षिणां विभज्य दातुमहमुत्सृज्ये।

## गोदानसङ्कल्पः

संकल्पः—देशकालौ संकीर्त्य, कृतस्य सप्रासादधूमावतीप्रतिष्ठा-कर्मणः साङ्गतासिद्धये तत्सम्पूर्णफलप्राप्त्यर्थं आचार्याय गोदानमहं करिष्ये।

## भूयसीदक्षिणासंकल्पः

संकल्पः—देशकालौ संकीर्त्य, कृतस्य सप्रासादधूमावतीप्रतिष्ठा-कर्मणि न्यूनातिरिक्तदोषपरिहारार्थं नानानामगोत्रेभ्यो नानाशर्मभ्यो नट-नर्तक-गायकेभ्यो दीनानाथेभ्यश्च यथाशक्ति भूयसीं दक्षिणां विभज्य दातुमहमुत्सृज्ये।

## ब्राह्मणभोजनसंकल्पः

संकल्पः—देशकालौ संकीर्त्य, कृतस्य सप्रासादधूमावतीप्रतिष्ठा-कर्मणः साङ्गतासिध्यर्थं तत्सम्पूर्णफलप्राप्त्यर्थं च यथासङ्ख्याकान् ब्राह्मणान् भोजयिष्ये।

## उत्तरपूजनम्

ततः यजमानः प्रधानपीठादीनां विशेषतः श्रीधूमावत्याः षोडशोपचारैः पञ्चोपचारैर्वा पूजनं कुर्यात्।

## मण्डपप्रधानपीठादिदानसंकल्पः

संकल्पः—देशकालौ संकीर्त्य, कृतस्य सप्रासादधूमावतीप्रतिष्ठा-कर्मणः साङ्गतासिद्ध्यर्थं तत्सम्पूर्णफलप्राप्त्यर्थमिमानि सोपस्कर-सहितानि प्रधानपीठादीनि आचार्याय तुभ्यमहं सम्प्रददे।

## अभिषेकः

यजमान और उसकी पत्नी के अभिषेक के लिये भद्रासन बिछावें। उस आसन पर यजमान पूर्व की ओर मुख करके बैठे और उसकी पत्नी उसके वाम भाग में बैठे। उस समय आचार्य सहित सभी ब्राह्मण पूर्वस्थापित सभी कलशों के जल को शुद्ध ताँबे के चौड़े मुख के पात्र में थोड़ा-थोड़ा लेकर 'दूर्वा और पंचपल्लवादि' से निम्न वैदिक मंत्रों का उच्चारण करके अभिषेक करें—**ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो**

हस्ताभ्याम्। सरस्वत्यै वाचो यन्तुर्यन्त्रिये दधामि बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चाम्यसौ॥ १॥ आपो हि ष्ठा मयोभुवस्तान ऊर्जे दधातन। महे रणाय चक्षसे॥ २॥ यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः॥ ३॥ तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः॥ ४॥ पञ्चनद्यः सरस्वतीमपियन्ति सस्रोतसः। सरस्वती तु पञ्चधा सो देशेऽभवत्सरित्॥ ५॥ द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः। वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्वꣳ शान्तिः शान्तिरेवशान्तिः सा मा शान्तिरेधि॥ ६॥ यतोयतः समीहसे ततो नो अभयं कुरु। शन्नः कुरु प्रजाभ्योऽभयं नः पशुभ्यः॥ ७॥

## पुराणमन्त्रैरभिषेकः

सुरास्त्वामभिषिञ्चन्तु ब्रह्म-विष्णु-महेश्वराः।
वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः॥ १॥

प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते।
आखण्डलोऽग्निर्भगवान् यमो वै निर्ऋतिस्तथा॥ २॥

वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः।
ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु ते सदा॥ ३॥

कीर्तिर्लक्ष्मीधृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः।
बुद्धिर्लज्जा वपुः शान्तिः कान्तिस्तुष्टिश्च मातरः॥ ४॥

एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः।
आदित्यश्चन्द्रमा भौमो बुध-जीव-सितार्कजा॥ ५॥

ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः।
देव-दानव-गन्धर्वा यक्ष-राक्षस-पन्नगाः॥ ६॥

ऋषयो मनवो गावो देवमातर एव च।
देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ॥ ७॥
अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च।
औषधानि च रत्नानि कालस्याऽवयवाश्च ये ॥ ८॥
सरितः सागराः शैलास्तीर्थानि जलदा नदाः।
एते त्वामभिषिञ्चन्तु धर्मकामाऽर्थसिद्धये ॥ ९॥

## घृतच्छायापात्रदानम्

**यजमानः दक्षिणहस्ते जलाऽक्षत-द्रव्यं चादाय, सङ्कल्पं कुर्यात्— देशकालौ संकीर्त्य, गोत्रः शर्माऽहम् ( वर्माऽहम्, गुप्तोऽहम्, दासोऽहम् ) कृतस्य सप्रासादधूमावतीप्रतिष्ठाकर्मणः साङ्गतासिद्ध्यर्थं तत्सम्पूर्णफल-प्राप्त्यर्थं सर्वारिष्टविनाशार्थं चाज्यावेक्षणं करिष्ये।**

यजमान एक कांसे के चौड़े मुख के पात्र में घृत भरकर उसमें दक्षिणा सहित सुवर्ण छोड़कर अपने मुख की छाया को देखकर ब्राह्मण को प्रदान करें।

आचार्य निम्न मंत्र का उच्चारण करे और यजमान उसमें अपने मुख की छाया देखे—**ॐ रूपेण वो रूपमभ्यागा तुथो वो विश्ववेदा विभजतु। ऋतस्य पथा प्रेत चन्द्रदक्षिणा विस्वः पश्य व्यन्तरिक्षं यत्तस्व सदस्यैः॥**

छायापात्र में मुख देखने के पश्चात् यजमान निम्न संकल्प का उच्चारण कर उस चौड़े मुख के पात्र को ब्राह्मण को दे—

**देशकालौ संकीर्त्य, अमुकगोत्रः अमुकशर्माऽहम् ( वर्माऽहम्, गुप्तोऽहम्, दासोऽहम् ) ममैतच्छरीरावच्छिन्नसमस्तपापक्षयसर्वग्रहपीडा-शान्ति शरीरोत्थार्तिनाशाय प्रासादवाञ्छाऽऽयुरारोग्यादि सर्वसौभाग्य-प्राप्तये सर्वसौख्यप्राप्तये च इदं स्वमुखछायावीक्षिताज्यपूरितकांस्यपात्रं स-सुवर्णं सदक्षिणाकं श्रीरुद्रदैवतममुकगोत्राय अमुकशर्मणे सुपूजिताय ब्राह्मणाय तुभ्यमहं सम्प्रददे।'**

### प्रार्थना

याऽलक्ष्मीर्यच्च मे दौस्थ्यं सर्वाङ्गं समुपस्थितम्।
तत्सर्वं नाशयाऽऽज्य! त्वं श्रियमायुश्च वर्द्धय॥ १॥
आज्यं सुराणामहारः सर्वमाज्ये प्रतिष्ठितम्।
आज्यपात्रप्रदानेन शान्तिरस्तु सदा मम॥ २॥

### क्षमाप्रार्थना

आवाहनं न जानामि न जानामि विसर्जनम्।
पूजां चैव न जानामि क्षमस्व परमेश्वरि॥
मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वरि।
यत्पूजितं मया देवि परिपूर्णं तदस्तु मे॥
अपराधसहस्राणि क्रियन्तेऽहर्निशं मया।
दासोऽयमिति मां मत्त्वा क्षमस्व परमेश्वरि॥
ज्ञानतोऽज्ञानतो वापि यन्न्यूनमधिकं कृतम्।
तत्सर्वं क्षम्यतां देवि प्रसीद परमेश्वरि॥
कर्मणा मनसा वाचा प्रतिष्ठा हि मया कृता।
तेन तुष्टिं समासाद्य प्रसीद परमेश्वरि॥

## विसर्जनम्

सङ्कल्पः—देशकालौ सङ्कीर्त्य, अमुकगोत्रः अमुकशर्माऽहम् (वर्माऽहम्, गुप्तोऽहम्, दासोऽहम्) सप्रासादधूमावतीप्रतिष्ठाकर्माङ्गत्वेन देवविसर्जनं कर्म करिष्ये। इति सङ्कल्पय स्थापितदेवानग्निं च सानुनयं पुष्पाक्षतैर्विश्रीजेत्।

ॐ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे। उप प्रयन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा॥ १॥ यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहा। एष ते यज्ञो यज्ञपते सहसूक्तवाकः सर्ववीरस्तं जुषस्व स्वाहा॥ २॥

यान्तु देवगणाः सर्वे पूजामादाय मामिकाम्।
इष्टकामसमृद्ध्यर्थं पुनरागमनाय च॥ १॥

गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वरि।
यत्र ब्रह्मादयो देवा तत्र गच्छ हुताशन॥ २॥
प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत्।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः॥ ३॥
यस्य स्मृत्या च नामोत्त्या तपोयज्ञक्रियादिषु।
न्यूनं सम्पूर्णतां याति सद्या वन्दे तमच्युतम्॥ ४॥
चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च।
हूयते च पुनर्द्वाभ्यां स्मै यज्ञात्मने नमः॥ ५॥

आचार्य निम्न वाक्य का यजमान से उच्चारण करावें—**अनेन यथाशक्ति-कृतेन धूमावतीप्रतिष्ठाकर्मणा श्रीपापापहा महाविष्णुः प्रीयताम्।**

**यजमानः—'ॐ विष्णवे नमः' इति त्रिर्वदेत्।**

## प्रासादे ध्वजारोपणम्

ध्वजा प्रासाद की लम्बाई या उससे अर्ध या उससे भी अर्ध लम्बी हो अथवा मूल विस्तार के सोहलवें भाग के सदृश या उससे अर्ध हो। ध्वजदण्ड चौदह हाथ या नौ हाथ का होगा, तथा इसका अधिवास भी देवताओं के साथ ही करना चाहिए। ध्वज की पञ्चोपचार से पूजा कर मन्दिर के पास लाकर उसमें निम्न श्लोकों से पाशुपतमहास्त्र का ध्यान करके स्थापित करें—

सूर्यकोटिसहस्राभं प्रलयाम्बुदनिस्वनम्।
प्रदीप्तदशनप्राणं प्रकाशं मुखकन्दरम्॥
त्र्यक्षं तडिल्लताजिह्वं प्रदीप्तश्मश्रुमूर्द्धजम्।
सर्वोपवीतं शूलासिशक्तिमुद्गरधारिणम्॥
चतुर्हस्तं चतुर्वक्त्रं सूर्यचन्द्रार्धशेखरम्।
देवदानवदैत्यानां दर्पितानां विनाशनम्॥

लालरंग की रेशमी ध्वजा को शिखर पर स्थापित करें। यह ध्वज प्रासाद के पीछे नैर्ऋत्य, वायव्य अथवा ईशान कोण में शिखर सहित प्रासाद को ऊँचाई के तृतीय, चतुर्थ अथवा पञ्चमांश ऊँचे ध्वज स्तम्भ का आधार बनाकर उसपर आरोपित कर आचार्य निम्न श्लोकों का उच्चारण करते हुए यजमान से ध्वज को अभिमंत्रित करवाने के लिए प्रार्थना करवायें—

**शान्तिरस्तु शिवञ्चास्तु स्थानस्यास्य शुभं तथा।**
**प्राणिनः सुखिनः सन्तु राजा च विजयी भवेत्॥ १॥**
**यावच्चन्द्रश्च सूर्यश्च तावदत्र स्थिरो भव।**
**दुरितं यत्समस्तानां सत् क्रियायै धुनोतु सः॥ २॥**
**प्रजाहानिश्च दुर्भिक्षं माभूज्जगति सर्वदा।**
**त्वत्प्रसादाच्च तत्सर्वं शुभं भवतु वो नमः॥ ३॥**

## चतुर्थीकर्म

**सङ्कल्पः—देशकालौ सङ्कीर्त्य, धूमावतीप्रतिष्ठाङ्गत्वेन विहित धूमावतीचतुर्थीकर्म करिष्ये।**

निम्न लेपन द्रव्यों को गौ के घृत में मिलाकर धूमावती देवी की मूर्ति पर लगावें—

तदुपरान्त—**प्रथमेऽहनि—कुङ्कुमेन धूमावतीं लेपयित्वा पूजयेत्। द्वितीयदिने—हरिद्रासिद्धार्थचूर्णेन। तृतीयदिने—पिष्टसितचन्दनचूर्णेन। चतुर्थदिने—मनःशिलाप्रियङ्गुचूर्णेन। पञ्चमेदिने—कृष्णाञ्जनतिलचूर्णेन। षष्ठे दिने—रक्तचन्दन-पद्मकेशरचूर्णेन। सप्तमेदिने—गोरोचननाग-केसरचूर्णेन।**

उपरोक्त लेपन द्रव्यों को गाय के घृत में मिलावें। तदुपरान्त चन्दन, पुष्प, धूप, दीप, नैवेद्यादि से धूमावतीदेवी का पूजन करवाकर आचार्य कुण्ड में उन्हीं के निम्न मन्त्र के द्वारा अट्ठाईस बार घृत की आहुति यजमान से प्रदान करावें—

**ॐ धूम्रा बभ्रुनीकाशा पितॄणाꣳ सोमवतां बभ्रवो धूम्रनीकाशाः पितॄणां बर्हिषदां कृष्णा बभ्रुनीकाशाः पितॄणामग्निष्वात्तानां कृष्णाः पृषन्तस्त्रैयम्बकाः स्वाहा॥**

**ॐ मुञ्चन्तु मा शपथ्यादथो वरुण्यादुत। अथो यमस्य पड्वीशात्सर्वस्माद्देवकिल्विषात्॥**

जिस समय उपरोक्त मन्त्र का उच्चारण हो, उस समय आचार्य अपने दाहिने हाथ में और वरण किये हुए ब्राह्मणों के भी दायें हाथ में यजमान से मौली बँधवावें। तदुपरान्त यजमान अपनी पत्नी के साथ आचार्य सहित सभी ब्रह्मणों का पूजन कर उन्हें दक्षिणा प्रदान करे।

## आशीर्वादः

**ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः।**
**स्वस्ति नस्ताक्ष्यों अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥ १॥**
**दीर्घायुस्त ओषधे खनिता यस्मै च त्वा खनाम्यहम्।**
**अथो त्वं दीर्घायुर्भूत्वा शतवल्शा विरोहतात्॥ २॥**
**पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः।**
**घृतेन त्वं तन्वं वर्धयस्व सत्याः सन्तु यजमानस्य कामाः॥ ३॥**
**ॐ यावती द्यावापृथिवी यावच्च सप्त सिन्धवो वितस्थिरे।**
**तावन्तमिन्द्र ते ग्रहमूर्जा गृह्णाम्यक्षितं मयि गृह्णाम्यक्षितम्॥ १॥**
**श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्।**
**इष्णन्निषाणामुं म इषाण सर्वलोकं म इषाण॥ २॥**

**श्रीर्वर्च्चस्वमायुष्यारोग्यमाविधात् पवमानं महीयते।**
**धान्यं धनं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः॥ १॥**
**आयुष्कामो यशस्कामो पुत्र-पौत्रस्तथैव च।**
**आरोग्यं धनकामश्च सर्वे कामा भवन्तु ते॥ २॥**
**अपुत्राः पुत्रिणः सन्तु पुत्रिणः सन्तु पौत्रिणः।**
**निर्धनाः सधनाः सन्तु जीवन्तु शरदां शतम्॥ ३॥**
**मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः।**
**शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव॥ ४॥**

ततो यजमानाय-प्रसादार्पणम्।

॥ इति धूमावतीप्रतिष्ठाविधिः॥

# धूमावतीपूजाविधिः

यजमान और उसकी धर्मपत्नी को आसन पर पूर्वाभिमुख बैठाकर निम्न मंत्र और पौराणिक श्लोक का उच्चारण करते हुए यजमान के मस्तक पर आचार्य तिलक करें—

**ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः।**
**स्वस्ति नस्ताक्ष्यों अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥**
**आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः।**
**तिलकं ते प्रयच्छन्तु कामधर्मार्थसिद्धये॥**

आचार्य निम्न तीन नामों का उच्चारण करते हुए यजमान से आचमन करावें—**ॐ केशवाय नमः ॐ नारायणाय नमः ॐ माधवाय नमः।**

पुनः **ॐ ऋषिकेशाय नमः, ॐ गोविन्दाय नमः** का उच्चारण करके यजमान का हाथ जल से धुलवावें।

आचार्य निम्न मन्त्र का उच्चारण करके यजमान को कुशा की पवित्री धारण करवाके प्राणायाम करावें—**ॐ पवित्रे स्थो वैष्णव्यौ सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः॥ तस्य ते पवित्रपते पवित्र पूतस्य यत्कामः पुने तच्छकेयम्॥**

आचार्य निम्न श्लोक का उच्चारण करके यजमान के ऊपर और पूजा-सामग्री की पवित्रता हेतु दूर्वा के द्वारा जल छिड़कें—

**ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा।**
**यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः॥**
**ॐ पुण्डरीकाक्षः पुनातु, ॐ पुण्डरीकाक्षः पुनातु, ॐ पुण्डरीकाक्षः पुनातु।**

आचार्य निम्न मंत्र और आगे दिए हुए श्लोक का उच्चारण करते हुए यजमान से भगवान विष्णु का ध्यान करावें—

**ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पाठं०सुरे स्वाहा॥**

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं,
विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम्।
लक्ष्मीकान्तं कमलनयनं योगभिर्ध्यानगम्यं,
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम्॥

सर्वप्रायश्चित्तसंकल्पः—श्रीमदनन्तवीर्यस्य आदित्यनारायणस्य अचिन्त्यापरिमितशक्त्या ध्रियमाणस्य महाजलौघमध्ये परिभ्रममाणानामनेककोटिब्रह्माण्डानामेकतमे अव्यक्तमहदहङ्कारपृथिव्यप्तेजोवाय्वाकाशाद्यावरणैरावृते अस्मिन् महति ब्रह्माण्डखण्डयोर्मध्ये आधारशक्तिवराहकूर्मानन्ताद्यष्टदिग्गजोपरि प्रतिष्ठिते सप्तपातालोपरिभागे सप्तान्तलोकषट्कस्याधोभागे महाकालायमानशेषस्य सहस्त्रफणामणिमण्डिते दिग्दन्तिदन्तशुण्डादण्डोत्तम्भिते लोकालोकाचलवलयिते लवणेक्षुसुरासर्पिदधिक्षीरोदकार्णवपरिवृते जम्बूप्लक्षशाल्मलिकुशक्रौञ्चशाकपुष्करसप्तद्वीपमण्डिते कांस्यताम्रगभस्तिनागगन्धर्वचारणभारतादिनवखण्ड-खण्डिते भारतवर्षे भरतखण्डे अयोध्या - मथुरा - माया - काशी - काञ्च्यवन्ती - द्वारावती - कुरुक्षेत्र - पुष्करादिनानातीर्थयुक्तकर्मभूमौ (मध्यरेखायाः पूर्वदिग्भागे भागीरथ्याः पश्चिमे तीरे) जगत्स्त्रष्टुः परार्द्धद्वयजीविनो ब्रह्मणो द्वितीये परार्द्धे तस्य प्रथमवर्षे प्रथममासे प्रथमपक्षे प्रथमदिवसे अह्नो द्वितीययामे तृतीयमुहूर्ते प्रथमघटिकायां सप्तमे वैवस्वतमन्वन्तरेऽष्टाविंशतितमे कलियुगे कलिप्रथमचरणे बौद्धावतारे विक्रमशके वर्तमानेऽमुकनाम्नि संवत्सरे अमुकऋतौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते सूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथास्थानस्थितेषु सत्सु एवं गुणगणविशिष्टे देशे काले च अमुकशर्मणो मम जन्मप्रभृति अद्य दिनं यावत् ज्ञाताज्ञात-कामाकाम - सकृदसकृत्कृत - कायिक - वाचिक - मानसिक-सांसर्गिक - स्पृष्टास्पृष्ट -भुक्ताभुक्त -पीतापीत - सकल-

पातकाति - पातकोपपातक - लघुपातक -सङ्करीकरण - मलिनी-करणापात्रीकरण-जातिभ्रंशकरप्रकीर्णकपातकानां मध्ये संभावितानां पापानां क्षयद्वारा धूमावतीपूजाकर्माधिकारार्थं श्रीपरमेश्वरप्रीत्यर्थं गोमूल्यदानरूपप्रत्याम्नायद्वाराऽहमाचरिष्ये।

## पञ्चगव्यनिर्माणम्

आचार्य एक चौड़े मुख के पात्र में पञ्चगव्य का निर्माण निम्न मन्त्रों का उच्चारण करते हुए करें—

गोमूत्रम्—**ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्॥**

गोमयम्—**गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोप ह्वये श्रियम्॥**

पयः—**ॐ पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयो धाः। पयस्वतीः प्रदिशः सन्तु मह्यम्॥**

दधिः—**ॐ दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः। सुरभि नो मुखा करत्प्र ण आयूꣳषि तारिषत्॥**

आज्यम्—**ॐ तेजोसि शुक्रमस्यमृतमसि धामनामासि। प्रियं देवानामनाधृष्टन्देवयजन्मसि॥**

कुशोदकम्—**ॐ देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥ इति कुशोदकम्॥ इति आलोडनं तेनैवाभिमन्त्रणञ्च॥ एवं पञ्चगव्य सम्पाद्य।**

## पञ्चगव्यप्राशनम्

आचार्य निम्न श्लोक का उच्चारण करते हुए यजमान से पञ्चगव्य का प्राशन करावें—

ॐ यत्त्वगस्थिगतं पापं देहे तिष्ठति मामके।
प्राशनात् पंचगव्यस्य दहत्यग्निरिवेन्धनम्॥

आचार्य निम्न विनियोग और श्लोक का उच्चारण करके यजमान से आसन शुद्धि कर्म करावें—

**ॐ पृथ्वीतिमन्त्रस्य मेरुपृष्ठ ऋषिः, सुतलं छन्दः, कूर्मो देवता आसनपवित्र करणे विनियोगः।**

**ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता।**
**त्वं च धारय मां देवि! पवित्रं कुरु चासनम्॥**

आचार्य निम्न श्लोक का उच्चारण करके यजमान से उसकी शिखा का बन्धन करावें—

**ब्रह्मभावसहस्रस्य रुद्रभावशतस्य च।**
**विष्णोः संस्मरणार्थं हि शिखाबन्धं करोम्यहम्॥**

यजमान से भूमि में अक्षत छोड़वाकर उसपर दीप स्थापित करवाकर प्रज्वलित करावें और निम्न श्लोक का उच्चारण करके उस दीप की प्रार्थना करावें—

**भो दीप! देविरूपस्त्वं कर्मसाक्षी ह्यविघ्नकृत्।**
**यावत्कर्मसमाप्तिः स्यात् तावत्त्वं सुस्थिरो भव॥**

तदुपरान्त आचार्य और ब्राह्मण 'ॐ आ नो भद्रा०' से आरम्भ कर 'सर्वकार्मार्थसिद्धये' तक पढ़कर स्वस्तिवाचन करें।

**ॐ आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः।**
**देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवे दिवे॥ १॥**
**देवानां भद्रा सुमतिर्ऋजूयतां देवानाꣳ रातिरभि नो निवर्तताम्।**
**देवानाꣳ सख्यमुपसेदिमा वयं देवा न आयुः प्रतिरन्तु जीवसे॥ २॥**
**तान्पूर्वया निविदा हूमहे वयं भगं मित्रमदितिन्दक्षमस्त्रिधम्।**
**अर्यमणं वरुणꣳ सोममश्विना सरस्वती नः सुभगा मयस्करत्॥ ३॥**
**तन्नो वातो मयो भुव्वातु भेषजन्तन्माता पृथिवी तत्पिता द्यौः।**
**तद्ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणु तन्धिष्ण्या युवम्॥ ४॥**
**तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम्।**
**पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये॥ ५॥**

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥ ६ ॥
पृषदश्वा मरुतः पृश्निमातरः शुभं यावानो विदथे षु जग्मयः।
अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसागमन्निह॥ ७ ॥
भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः।
स्थिरैरङ्गैस्तुष्टुवाऽँ॰ सस्तनूभिर्व्यशेमहि देवहितं यदायुः॥ ८ ॥
शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम्।
पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः॥ ९ ॥
अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः।
विश्वे देवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्॥ १०॥
द्यौः शान्तिरन्तरिक्षऽँ॰ शान्तिः पृथिवी
शान्तिरापः शान्तिरोषधयः शान्तिः।
वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः
सर्वऽँ॰ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि॥ ११॥
यतो यतः समीहसे ततो नो अभयं कुरु।
शं नः कुरु प्रजाभ्योऽभयं नः पशुभ्यः॥ १२॥
सुशान्तिः सर्वारिष्टशान्तिर्भवतु॥

ॐ लक्ष्मीनारायणाभ्यां नमः। ॐ उमामहेश्वराभ्यां नमः। ॐ वाणीहिरण्यगर्भाभ्यां नमः। ॐ शचीपुरन्दराभ्यां नमः। ॐ मातापितृ-चरण कमलेभ्यो नमः। ॐ इष्टदेवताभ्यो नमः। ॐ ग्रामदेवताभ्यो नमः। ॐ कुल देवताभ्यो नमः। ॐ स्थानदेवताभ्यो नमः। ॐ वास्तुदेवताभ्यो नमः। ॐ एतत्कर्मप्रधानदेवताभ्यो नमः। ॐ गुरुचरणकमलेभ्यो नमः। ॐ सर्वेभ्यो देवेभ्यो नमः। ॐ सर्वेभ्यो ब्राह्मणेभ्यो नमः। ॐ भूर्भुवः स्वः श्रीसिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः।

ॐ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः।
लम्बोदरश्च विकटो विघ्ननाशो विनायकः॥ १ ॥

धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः।
द्वादशैतानि नामानि यः पठेच्छृणुयादपि॥ २ ॥
विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा।
संग्रामे संकटे चैव विघ्नस्तस्य न जायते॥ ३ ॥
शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम्।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये॥ ४ ॥
अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः।
सर्वविघ्नहरस्तस्मै गणाधिपतये नमः॥ ५ ॥
वक्रतुण्ड! महाकाय! कोटिसूर्य-समप्रभ!।
अविघ्नं कुरु मे देव! सर्वकार्येषु सर्वदा॥ ६ ॥
सर्वमङ्गलमङ्गल्ये शिवे सर्वार्थसाधिके!।
शरण्ये त्र्यम्बके गौरि नारायणि! नमोऽस्तु ते॥ ७ ॥
सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम्।
येषां हृदिस्थो भगवान् मङ्गलायतनं हरिः॥ ८ ॥
तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव।
विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि॥ ९ ॥
लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः।
येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः॥ १०॥
यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम॥ ११॥
सर्वेष्वारम्भकार्येषु त्रयस्त्रिभुवनेश्वराः।
देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः॥ १४॥
विश्वेशं माधवं ढुण्ढिं दण्डपाणिं च भैरवम्।
वन्दे काशीं गुहां गङ्गां भवानीं मणिकर्णिकाम्॥ १५॥
विनायकं गुरुं भानुं ब्रह्म-विष्णु-महेश्वरान्।
सरस्वतीं प्रणम्यादौ सर्वकामार्थसिद्धये॥ १६॥

## सङ्कल्पः

ॐ विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य श्रीब्रह्मणोऽह्नि द्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे जम्बूद्वीपे भरतखण्डे भारतवर्षे आर्यावर्तैकदेशे, अमुकक्षेत्रे अमुकनद्या अमुकतीरे विक्रमशके बौद्धावतारे अमुकनाम्नि संवत्सरे अमुकायने अमुकऋतौ महामाङ्गल्यप्रदमासोत्तमे मासे अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते सूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथाराशिस्थानस्थितेषु सत्सु एवं गुणगणविशेषणविशिष्टायां शुभपुण्यतिथौ अमुकगोत्रोऽमुकशर्माहम् (वर्माऽहम्, गुप्तोऽहम्, दासोऽहम्) मम सकुटुम्बस्य सपरिवारस्य सर्वविधरोग-संकट-उपद्रव-राजभय - शत्रुभय - भूत - प्रेत-पिशाचादिभय-निवारणपूर्वकदीर्घायु-र्विपुलधन-धान्य-पुत्र-पौत्रादि-सन्ततिवृद्ध्यर्थं च आयुरारोग्यैश्वर्य-स्थिरलक्ष्मीसर्वसम्पदभिवृद्धिपूर्वकं निरतिशयानन्द-ब्रह्मपदप्राप्ति-श्रीसर्वफलाक्षय्यसुखकामः श्रुति-स्मृति-पुराणोक्तफलावाप्तिकामश्च धमार्थकाममोक्षचतुर्विधपुरुषार्थसिद्ध्यर्थं श्रीधूमावतीदेवीप्रीत्यर्थं च धूमावतीपूजनमहं करिष्ये।

तदङ्गत्वेन स्वस्तिपुण्याहवाचनं षोडशमातृकापूजनं वसोर्द्धारा-पूजनमायुष्यमन्त्रजपं नान्दीश्राद्धमाचार्यादिवरणानि च करिष्ये। तत्रादौ निर्विघ्नतासिद्ध्यर्थं गणेशाम्बिकयोः पूजनं करिष्ये।

---

**विशेष**—गणेशाम्बिका पूजन से नान्दीश्राद्ध तक के कर्मों को करवाने के लिए इस पुस्तक की पृष्ठ संख्या ४५ से ७३ को देखें।

## एकतन्त्रेण वरणसंकल्पः

ॐ विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य श्रीब्रह्मणोऽह्नि द्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे जम्बूद्वीपे भरतखण्डे भारतवर्षे आर्यावर्तैकदेशे, अमुकक्षेत्रे अमुकनद्या अमुकतीरे विक्रमशके बौद्धावतारे अमुकनाम्नि संवत्सरे अमुकायने अमुकऋतौ महामाङ्गल्यप्रदमासोत्तमे मासे अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते सूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथास्थानस्थितेषु सत्सु एवं गुणगणविशेषणविशिष्टायां शुभपुण्यतिथौ अमुकगोत्रोऽमुकशर्माऽहम् ( वर्माऽहम्, गुप्तोऽहम्, दासोऽहम् ) अस्मिन् धूमावतीपूजनकर्मणि एभिर्वरणद्रव्यैः नानानामगोत्रान् नानानामधेयान् शर्मणः आचार्यादिब्राह्मणान् युष्मान् वृणे।

## दिग्-रक्षणम्

ॐ रक्षोहणं वलगहनं वैष्णवीमिदमहं तं वलगमुत्किरामि यं मे निष्ट्यो यममात्यो निचखानेदमहं तं वलगमुत्किरामि यं मे समानो यमसमानो निचखानेदमहं तं वलगमुत्किरामि यं मे सबन्धुर्यमसबन्धुर्निचखानेदमहं तं वलगमुत्किरामि यं मे सजातो यमसजातो निचखानोत्कृत्यां किरामि॥ १॥

रक्षोहणो वो वलगहनः प्रोक्षामि वैष्णवान्रक्षोहणो वो वलगहनोऽवनयामि वैष्णवान्रक्षोहणो वो वलगहनोऽवस्तृणामि वैष्णवान्रक्षोहणौ वां वलगहना ऽउपदधामि वैष्णवी रक्षोहणौ वां वलगहनौ पर्यूहामि वैष्णवी वैष्णवमसि वैष्णवाः स्थ॥ २॥

रक्षसां भागोऽसि निरस्तर्ठ० रक्ष ऽइदमहर्ठ० रक्षोऽभितिष्ठामीदमहर्ठ० रक्षोऽवबाध इदमहर्ठ० रक्षोऽधमं तमो नयामि। घृतेन

द्यावापृथिवी प्रोर्णुवाथां वायो वे स्तोकानामग्निराज्यस्य वेतु स्वाहा स्वाहाकृते ऽऊर्ध्वनभसं मारुतं गच्छतम्॥ ३॥

**रक्षोहा विश्वचर्षणिरभि योनिमयोहते। द्रोणे सधस्थमासदत्॥ ४॥**

यजमान अथवा आचार्य आचमन और प्राणायाम करने के उपरान्त अपने दाहिने हाथ में जल, अक्षत लेकर निम्न संकल्प करें—

**देशकालौ संकीर्त्य—अस्मिन् धूमावतीपूजनकर्मणि दिग्-रक्षणं करिष्ये।**

संकल्प की समाप्ति के पश्चात् संकल्प के जल को पात्र में अथवा भूमि में छोड़ दें। तदुपरान्त यजमान अपने बायें हाथ में पीली सरसों लेकर पूर्वादि चारो दिशाओं में आचार्य और ब्राह्मणों के द्वारा निम्न पौराणिक श्लोकों का उच्चारण करने पर दायें हाथ से पीली सरसों छींटें—

**यदत्र संस्थितं भूतः स्थानमाश्रित्य सर्वदा।**
**स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु॥ १॥**
**अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः।**
**ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया॥ २॥**
**अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम्।**
**सर्वेषामविरोधेन पूजाकर्म समारभे॥ ३॥**
**भूतानि राक्षसावापि येऽत्र तिष्ठन्ति केचन।**
**ते सर्वेऽप्यपगच्छन्तु शान्तिकं तु करोम्यहम्॥ ४॥**

**भावार्थ**—जो भूत इस स्थान का आश्रय लेकर सर्वदा रहता है। वह इस स्थान को छोड़कर जहाँ चाहे वहाँ चला जाय॥ १॥ जो भूत (प्राणी) इस भूमि पर रहते हैं, वे भूत यहाँ से दूर चले जाएँ। जो भूत विघ्न करने वाले हैं, वे शिव की आज्ञा से विनष्ट हो जायें॥ २॥ सभी दिशाओं से भूत एवं पिशाच भाग जाएँ। सबके अनुरोध से (यहाँ) मैं पूजाकर्म आरम्भ कर रहा हूँ॥ ३॥ यहाँ जो कोई भूत अथवा पिशाच रहते हैं, वे सभी यहाँ से दूर चले जायें। (क्योंकि यहाँ मैं) शान्तिकर्म करने जा रहा हूँ॥ ४॥

## केवलं नामाऽनुक्रमेण सर्वतोभद्रमण्डलदेवतास्थापनम्

सङ्कल्पः—देशकालौ सङ्कीर्त्य, अस्मिन् धूमावतीपूजनकर्मणि ब्रह्मादिदेवतानामावाहनं स्थापनं पूजनं च करिष्ये।

१. (मध्ये कर्णिकायाम्) ॐ भूर्भुवः स्वः ब्रह्मणे नमः, ब्रह्माणमावाहयामि स्थापयामि।

२. (उत्तरे वाप्याम्) ॐ भूर्भुवः स्वः सोमाय नमः, सोममावाहयामि स्थापयामि।

३. (ईशान्यां खण्डेन्दौ) ॐ भूर्भुवः स्वः ईशानाय नमः, ईशानमावाहयामि स्थापयामि।

४. (पूर्वे वाप्याम्) ॐ भूर्भुवः स्वः इन्द्राय नमः, इन्द्रमावाहयामि स्थापयामि।

५. (आग्नेय्यां खण्डेन्दौ) ॐ भूर्भुवः स्वः अग्नये नमः, अग्निमावाहयामि स्थापयामि।

६. (दक्षिणे वाप्याम्) ॐ भूर्भुवः स्वः यमाय नमः, यममावाहयामि स्थापयामि।

७. (नैर्ऋत्यां खण्डेन्दौ) ॐ भूर्भुवः स्वः निर्ऋतये नमः, निर्ऋतिमावाहयामि स्थापयामि।

८. (पश्चिमे वाप्याम्) ॐ भूर्भुवः स्वः वरुणाय नमः, वरुणमावाहयामि स्थापयामि।

९. (वायव्यां खण्डेन्दौ) ॐ भूर्भुवः स्वः वायवे नमः, वायुमावाहयामि स्थापयामि।

१०. (वायुसोमयोर्मध्ये भद्रे) ॐ भूर्भुवः स्वः एकादशरुद्रेभ्यो मावाहयामि स्थापयामि।

११. ( सोमेशानयोर्मध्ये भद्रे ) ॐ भूर्भुवः स्वः एकादशरुद्रेभ्यो नमः, एकादशरुद्रानावाहयामि स्थापयामि।

१२. ( ईशानेन्द्रमध्ये भद्रे ) ॐ भूर्भुवः स्वः द्वादशादित्येभ्यो नमः, द्वादशादित्यानावाहयामि स्थापयामि।

१३. ( इन्द्राग्निमध्ये भद्रे ) ॐ भूर्भुवः स्वः अश्विनीभ्यां नमः, अश्विनीआवाहयामि स्थापयामि।

१४. ( अग्नि-यममध्ये भद्रे ) ॐ भूर्भुवः स्वः स-पैतृक-विश्वेभ्यो देवेभ्यो नमः, सपैतृकविश्वान् देवानावाहयामि स्थापयामि।

१५. ( यम-निर्ऋतिमध्ये भद्रे ) ॐ भूर्भुवः स्वः सप्तयक्षेभ्यो नमः, सप्तयक्षानावाहयामि स्थापयामि।

१६. ( निर्ऋति-वरुणमध्ये भद्रे ) ॐ भूर्भुवः स्वः अष्टकुलनागेभ्यो नमः, अष्टकुलनागानावाहयामि स्थापयामि।

१७. ( वरुण-वायुमध्ये भद्रे ) ॐ भूर्भुवः स्वः गन्धर्वाऽप्सरोभ्यो नमः, गन्धर्वाऽप्सरसः आवाहयामि स्थापयामि।

१८. ( ब्रह्म-सोममध्ये वाप्यां लिंगे वा ) ॐ भूर्भुवः स्वः स्कन्दाय नमः, स्कन्दमावाहयामि स्थापयामि।

१९. ( तत्रैव स्कन्दोत्तरतः ) ॐ भूर्भुवः स्वः वृषभाय नमः, वृषभ-मावाहयामि स्थापयामि।

२०. ( तदुत्तरे ) ॐ भूर्भुवः स्वः शूलाय नमः, शूलमावाहयामि स्थापयामि।

२१. ( अनेनैव मन्त्रेण तदुत्तरे ) ॐ भूर्भुवः स्वः महाकालाय नमः, महाकालमावाहयामि स्थापयामि।

२२. ( ब्रह्मेशानमध्ये शृङ्खलायाम् ) ॐ भूर्भुवः स्वः दक्षादि-सप्तगणेभ्यो नमः, दक्षादिसप्तगणानावाहयामि स्थापयामि।

२३. ( ब्रह्मेन्द्रमध्ये वाप्याम् ) ॐ भूर्भुवः स्वः दुर्गायै नमः, दुर्गामावाहयामि स्थापयामि।

२४. ( तत्पूर्वे ) ॐ भूर्भुवः स्वः विष्णवे नमः, विष्णुमावाहयामि स्थापयामि।

२५. ( ब्रह्माग्निमध्ये शृङ्खलायाम् ) ॐ भूर्भुवः स्वः स्वधायै नमः, स्वधामावाहयामि स्थापयामि।

२६. ( ब्रह्म-यममध्ये वाप्याम् ) ॐ भूर्भुवः स्वः मृत्युरोगेभ्यो नमः, मृत्युरोगानावाहयामि स्थापयामि।

२७. ( ब्रह्म-निर्ऋतिमध्ये शृङ्खलायाम् ) ॐ भूर्भुवः स्वः गणपतये नमः, गणपभिावाहयामि स्थापयामि।

२८. ( ब्रह्म-वरुणमध्ये वाप्याम् ) ॐ भूर्भुवः स्वः अद्भ्यो नमः, अपः आवाहयामि स्थापयामि।

२९. ( ब्रह्म-वायुमध्ये शृङ्खलायाम् ) ॐ भूर्भुवः स्वः मरुद्भ्यो नमः, मरुतः आवाहयामि स्थापयामि।

३०. ( ब्रह्मणः पादमूले ) ॐ भूर्भुवः स्वः पृथिव्यै नमः, पृथ्वीमावाहयामि स्थापयामि।

३१. ( तदुत्तरे ) ॐ भूर्भुवः स्वः गङ्गादिनदीभ्यो नमः, गङ्गादिनदीः आवाहयामि स्थापयामि।

३२. ( तदुत्तरे ) ॐ भूर्भुवः स्वः सप्तसागरेभ्यो नमः, सप्तसागरानावाहयामि स्थापयामि।

३३. ( कर्णिकापरिधौ ) ॐ भूर्भुवः स्वः मेरवे नमः, मेरुमावाहयामि स्थापयामि।

३४. ( ततः सत्त्वबाह्यपरिधौ सोमादिक्रमेण ) ॐ भूर्भुवः स्वः गदाय नमः, गदामावाहयामि स्थापयामि।

३५. (ईशान्याम्) ॐ भूर्भुवः स्वः त्रिशूलाय नमः, त्रिशूल-मावाहयामि स्थापयामि।

३६. (पूर्वे) ॐ भूर्भुवः स्वः वज्राय नमः, वज्रमावाहयामि स्थापयामि।

३७. (आग्नेय्याम्) ॐ भूर्भुवः स्वः शक्तये नमः, शक्तिमावाह-यामि स्थापयामि।

३८. (दक्षिणे) ॐ भूर्भुवः स्वः दण्डाय नमः, दण्डमावाहयामि स्थापयामि।

३९. (नैर्ऋत्याम्) ॐ भूर्भुवः स्वः खड्गाय नमः, खड्गमावाह-यामि स्थापयामि।

४०. (पश्चिमे) ॐ भूर्भुवः स्वः पाशाय नमः, पाशमावाहयामि स्थापयामि।

४१. (वायव्याम्) ॐ भूर्भुवः स्वः अङ्कुशाय नमः, अङ्कुश-मावाहयामि स्थापयामि।

४२. (तद्बाह्ये उत्तरे रक्तपरिधौ सोमादिक्रमेण) ॐ भूर्भुवः स्वः गौतमाय नमः, गौतममावाहयामि स्थापयामि।

४३. (ईशान्याम्) ॐ भूर्भुवः स्वः भरद्वाजाय नमः, भरद्वाज-मावाहयामि स्थापयामि।

४४. (पूर्वे) ॐ भूर्भुवः स्वः विश्वामित्राय नमः, विश्वामित्र-मावाहयामि स्थापयामि।

४५. (आग्नेय्याम्) ॐ भूर्भुवः स्वः कश्यपाय नमः, कश्यप-मावाहयामि स्थापयामि।

४६. (दक्षिणे) ॐ भूर्भुवः स्वः जमदग्नये नमः, जमदग्नि-मावाहयामि स्थापयामि।

४७. (नैर्ऋत्याम्) ॐ भूर्भुवः स्वः वसिष्ठाय नमः, वसिष्ठ-मावाहयामि स्थापयामि।

४८. ( पश्चिमे ) ॐ भूर्भुवः स्वः अत्रये नमः, अत्रिमावाहयामि स्थापयामि।

४९. ( वायव्याम् ) ॐ भूर्भुवः स्वः अरुन्धत्यै नमः, अरुन्धती-मावाहयामि स्थापयामि।

५०. ( पूर्वे ) ॐ भूर्भुवः स्वः ऐन्द्र्यै नमः, ऐन्द्रीमावाहयामि स्थापयामि।

५१. ( आग्नेय्याम् ) ॐ भूर्भुवः स्वः कौमार्य्यै नमः, कौमारी-मावाहयामि स्थापयामि।

५२. ( दक्षिणे ) ॐ भूर्भुवः स्वः ब्राह्म्यै नमः, ब्राह्मीमावाहयामि स्थापयामि।

५३. ( नैर्ऋत्याम् ) ॐ भूर्भुवः स्वः वाराह्यै नमः, वाराहीमावाहयामि स्थापयामि।

५४. ( पश्चिमे ) ॐ भूर्भुवः स्वः चामुण्डायै नमः, चामुण्डा-मावाहयामि स्थापयामि।

५५. ( वायव्ये ) ॐ भूर्भुवः स्वः वैष्णव्यै नमः, वैष्णवीमावाहयामि स्थापयामि।

५६. ( उत्तरे ) ॐ भूर्भुवः स्वः माहेश्वर्यै नमः, माहेश्वरीमावाहयामि स्थापयामि।

५७. ( ईशान्याम् ) ॐ भूर्भुवः स्वः वैनायक्यै नमः, वैनायकी-मावाहयामि स्थापयामि।

एवमावाह्य,

प्रतिष्ठा सर्वदेवानां मित्रावरुणनिर्मिता।
प्रतिष्ठां ते करोम्यत्र मण्डले दैवतैः सह॥

'ब्रह्माद्यावाहितदेवाः सुप्रतिष्ठिता वरदा भवत' इति प्रतिष्ठाप्य, 'ब्रह्मादिदेवेभ्यो नमः' इति यथालब्धोपचारैः सम्पूजयेत्।

## प्रधानकलशस्थापनम्

ततः कुङ्कुमादिना भूमौ पद्मं कृत्वा—**ॐ मही द्यौः पृथिवी च न ऽइमं यज्ञं मिमिक्षताम्। पिपृतान्नो भरीमभिः॥** इति भूमिं स्पृष्ट्वा। **ॐ ओषधयः समवदन्त सोमेन सह राज्ञा। यस्मै कृणोति ब्राह्मणस्तर्ठ० राजन्पारयामसि॥** इति सप्तधान्यं विकिरेत्। **ॐ आजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः। पुनरूर्जा निवर्तस्व सा नः सहस्रं धुक्ष्वोरुधारा पयस्वती पुनर्माविशताद्रयिः॥** इति सप्तधान्योपरि कलशं स्थापयेत्। **ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्ज्जनी स्थो वरुणस्य ऽऋतसदन्यसि वरुणस्य ऽऋतसदनमसि वरुणस्य ऽऋतसदन-मासीद॥** इति कलशे जलं पूरयेत्। **ॐ त्वां गन्धर्वाऽअखनँस्त्वा-मिन्द्रस्त्वां बृहस्पतिः। त्वामोषधे सोमो राजा विद्वान्यक्ष्मादमुच्यत॥** इति कलशे गन्धं क्षिपेत्। **ॐ या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा। मनै नु बभ्रूणामहर्ठ० शतं धामानि सप्त च॥** इति मन्त्रेण कलशे सर्वौषधी प्रक्षिपेत्। **ॐ काण्डात्काण्डात् प्ररोहन्ती परुषः परुषस्परि। एवा नो दूर्वे प्रतनु सहस्रेण शतेन च॥** इति कलशे दूर्वाङ्कुरान् क्षिपेत्। **ॐ अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता। गोभाज ऽइत्किलासथयत्सनवथ पूरुषम्॥** इति पञ्चपल्लवान्। **ॐ पवित्रे स्थो वैष्णव्यौ सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः॥ तस्य ते पवित्रपते पवित्र पूतस्य यत्कामः पुने तच्छकेयम्॥** इति मन्त्रेण कलशे पवित्रं क्षिपेत्। **ॐ स्योना पृथिवि नो भवान्नृक्षरा निवेशनी। यच्छा नः शर्म्म सप्रथाः॥** इति सप्तमृदः क्षिपेत्। **ॐ याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वर्ठ० हसः॥** इति कलशे पूगीफलं प्रक्षिपेत्। **ॐ परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत्। दधद्रत्नानि दाशुषे॥** इति पञ्चरत्नानि। **ॐ हिरण्यगर्भः समवर्त्त ताग्रे भूतस्य जातः पतिरेक ऽआसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥** इति

कलशे हिरण्यं क्षिपेत्। **ॐ सुजातो ज्योतिषा सह शर्म वरूथमासदत्स्वः। वासो अग्ने विश्वरूपर्ठ० संव्ययस्व विभावसो॥** इति युग्मवस्त्रेण कलशं वेष्टयेत्। **ॐ पूर्णा दर्वि परापत सुपूर्णा पुनरापत। वस्नेव विक्रीणावहा इषमूर्जर्ठ० शतक्रतो॥** इति कलशोपरि पूर्णपात्रं न्यसेत्। **ॐ याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः। बृहस्पतिप्रसूतास्तानो मुञ्चन्त्वर्ठ०हसः॥** इति मन्त्रेण कलशोपरि नारिकेलफलं संस्थाप्य। **ॐ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुशर्ठ०स मा न आयुः प्रमोषीः॥ अस्मिन् कलशे वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकमावाहयामि स्थापयामि। 'ॐ अपांपतये वरुणाय नमः' इति षोडशोपचारैर्वरुणदेवता सम्पूज्य।**

## धूमावतीयन्त्रनिर्माणम्

चौकोर स्वर्णपत्र अथवा रजत-पत्र पर अष्टगन्ध या चंदन से सोने की शलाका द्वारा सर्व-प्रथम अष्टदलात्मक लिखें। जिसमें महाषट्कोण कर्णिका हो तथा यह चार द्वारों से सुशोभित हो।



## मातृकान्यासः

विनियोगः—**तत्र ओमस्य मातृकामन्त्रस्य ब्रह्मा ऋषिर्गायत्री छन्दो मातृकासरस्वतीदेवता हलो बीजानि स्वराश्शक्तयस्तदुभयङ्कीलक-मभीष्टसिद्ध्यर्थे विनियोगः।**

**शिरसि ब्रह्मणे ऋषये नमः। मुखे गायत्रीछन्दसे नमः। हृदि मातृकासरस्वत्यै देवतायै नमः। लिङ्गे हल्भ्यो बीजेभ्यो नमः। पादयोस्स्वरेभ्यश्शक्तिभ्यो नमः सर्व्वाङ्गे तदुभयकीलकाय नमः॥**

## षडङ्गन्यासः

ॐ अँकँखँगँघँङँआँ हृदयाय नमः। इँचँछँजँझँञँईँ शिरसे स्वाहा। उँटँठँडँढँणँऊँ शिखायै वषट्। एँतँथँदँधँनँऐँ कवचाय हुम्। ओँपँफँबँभँमँऔँ नेत्रत्रयाय वौषट्, अँयँरँलँवँशँषँहँक्षँअः अस्त्राय फट्॥

## करन्यासः

ॐ अँकँखँगँघँङँआँ अङ्गुष्ठाभ्यां नमः। इँचँछँजँझँञँईँ तर्जनीभ्यां स्वाहा। उँटँठँडँढँणँऊँ मध्यमाभ्यां वषट्। एँतँथँदँधँनँऐँ अनामिकाभ्यां हुम्। ओँपँफँबँभँमँऔँ कनिष्ठिकाभ्यां वौषट्। अँयँरँलँवँशँषँसँहँक्षँअः करतलकरपृष्ठाभ्यां फट्॥

## बहिर्म्मातृकान्यासः

ॐ ललाटे अँ नमः। मुखवृत्ते आँ नमः। दक्षनेत्रे इं नमः। वामनेत्रे ईं नमः। दक्षकर्ण्णे उँ नमः। वामकर्ण्णे ऊँ नमः। दक्षनासायाम् ऋँ नमः। वामनासायाम् ॠँ नमः। दक्षगण्डे लृँ नमः। वामगण्डे लॄँ नमः। ऊर्ध्वोष्ठे एँ नमः। अधरोष्ठे ऐँ नमः। ऊर्ध्वदन्तपङ्क्तौ ओं नमः। अधोदन्तपङ्क्तौ औँ नमः। शिरसि अँ नमः। मुखे अः नमः। दक्षिणबाहुमूले कँ नमः। कूर्प्परे खँ नमः। मणिबन्धे गँ नमः। अङ्गुलीमूले घँ नमः। अङ्गुलग्रे ङँ नमः। वामबाहुमूले चँ नमः, कूर्प्परे छँ नमः। मणिबन्धे जँ नमः। अङ्गुलीमूले झँ नमः, अङ्गुल्यग्रे ञँ नमः। दक्षिणोरुमूले टँ नमः। जानुनि ठँ नमः। गुल्फे डँ नमः, अङ्गुलीमूले ढँ नमः। अङ्गुल्यग्रे णँ नमः। वामोरुमूले तँ नमः। जानुनि थँ नमः। गुल्फे दँ नमः। अङ्गुलीमूले धँ नमः। अङ्गुल्यग्रे नँ नमः। दक्षपार्श्वे पँ नमः। वामपार्श्वे फँ नमः। पृष्ठे बँ नमः। नाभौ भँ नमः। उदरे मँ नमः। हृदये यँ त्वगात्मने नमः। दक्षांसे रँ असृगात्मने नमः, ककुदि लँ मांसात्ने नमः। वामांसे वँ मेदआत्मने नमः। हृदयाद्दक्षभुजाग्रान्तं शमस्थ्यात्मने नमः। हृदयाद्वामभुजाग्रान्तं षँमज्ञात्मने नमः। हृदयाद्दक्ष-

पादाग्रान्तं सँ शुक्रात्मने नमः। हृदादिवामपादाग्रान्तं हँ आत्मने नमः। हृदयान्मस्तकान्तं क्षंपरमात्मने नमः॥

इन न्यासों को करने बाद पुनः निम्न न्यासों को करें—

## ऋष्यादिन्यासः

ॐ पिप्पलाद ऋषये नमः शिरसि। निवृच्छन्दसे नमः मुखे। ज्येष्ठादेवतायै नमः हृदि। धूं बीजाय नमः गुह्ये। स्वाहा शक्तये नमः पादयोः। धूमावती कीलकाय नमः नाभौ। विनियोगाय नमः सर्वाङ्गे।

## करन्यासः

ॐ धूं धूँ अङ्गुष्ठाभ्यां नमः। ॐ धूं तर्जनीभ्यां नमः। ॐ मां मध्यमाभ्यां नमः। ॐ वं अनामिकाभ्यां नमः। ॐ त्यैं कनिष्ठिकाभ्यां नमः। स्वाहा करतलकरपृष्ठाभ्यां नमः।

## हृदयादिषडङ्गन्यासः

ॐ धूं धूं हृदयाय नमः। ॐ धूं शिरसे स्वाहा। ॐ मां शिखायै वषट्। ॐ वं कवचाय हुम्। ॐ त्यैं नेत्रत्रयाय वौषट्। ॐ स्वाहा अस्त्राय फट्।

### ध्यानम्

धूम्राभां धूम्रवस्त्रां प्रकटितदशनां मुक्तबालाम्बराढ्यां
काकाङ्कस्यन्दनस्थां धवलकरयुगां शूर्पहस्तातिरूक्षाम्।
नित्यं क्षुत्क्षान्तदेहां मुहुरतिकुटिलां वारिवाञ्छाविचित्तां
ध्यायेद् धूमावतीं वामनयनयुगलां भीतिदां भीषणास्याम्॥ १॥

विवर्णा चञ्चला दुष्टा दीर्घा च मलिनाम्बरा।
विमुक्तकुन्तला रूक्षा विधवाविरलद्विजा॥
काकध्वजरथारूढा विलम्बितपयोधरा।
शूर्पहस्तातिरक्ताक्षीधृतहस्ता वरान्विता॥
प्रवृद्धघोणा तु भृशं कुटिला कुटिलेक्षणा।
क्षुत्पिपासार्दिता नित्यं भयदा कलहास्पदा॥ २॥

## पीठपूजनम्

ॐ धूम्रा बभ्रुनीकाशा पितॄणार्ठ० सोमवतां बभ्रवो धूम्रनीकाशाः पितॄणां बर्हिषदां कृष्णा बभ्रुनीकाशाः पितॄणामग्निष्वात्तानां कृष्णाः पृषन्तस्त्रैयम्बकाः॥ (शु०य०सं० २४/१८) अथवा ॐ धूम्रान्वसन्तायालभते श्वेतान् ग्रीष्माय कृष्णान्वर्षाभ्योऽरुणाञ्छरदे पृषतो हेमन्ताय पिशङ्गाञ्छिशिराय॥ (शु०य०सं० २४/११)

कर्णिकायाम्—ॐ मण्डूकाय नमः। ॐ कालाग्निरुद्राय नमः। ॐ मूलप्रकृत्यै नमः। ॐ आधारशक्तये नमः। ॐ कूर्माय नमः। ॐ शेषाय नमः। ॐ वाराहाय नमः। ॐ पृथिव्यै नमः। ॐ सुधाम्बुधये नमः। ॐ रत्नदीपाय नमः। ॐ मेरवे नमः। ॐ नन्दनवनाय नमः। ॐ कल्पवृक्षाय नमः। कर्णिकामूले—ॐ विचित्रानन्दभूम्यै नमः। कर्णिकोपरि—ॐ श्री रत्नमन्दिराय नमः। ॐ रत्नवेदिकायै नमः। ॐ धर्मवारणाय नमः। ॐ रत्नसिंहासनाय नमः। चतसृषु दिक्षु—ॐ धर्माय नमः। ॐ ज्ञानाय नमः। ॐ वैराग्याय नमः। ॐ ऐश्वर्याय नमः। ॐ अधर्माय नमः। ॐ अज्ञानाय नमः। ॐ अवैराग्याय नमः। ॐ अनैश्वर्याय नमः। पुनः मध्ये—ॐ आनन्दकन्दाय नमः। ॐ संविन्नालाय नमः। ॐ सर्वतत्त्वात्मक पद्माय नमः। ॐ प्रकृतिमय पत्रेभ्यो नमः। ॐ विकारमय केसरेभ्यो नमः। ॐ पञ्चाशद्बीजाढ्य कर्णिकायै नमः। ॐ अं द्वादश कलात्मने सूर्यमण्डलाय नमः। ॐ उं षोडशकलात्मने सोममण्डलाय नमः। ॐ मं दशकलात्मने वह्निमण्डलाय नमः। ॐ सं सत्त्वाय नमः। ॐ रं रजसे नमः। ॐ तं तमसे नमः। ॐ अं आत्मने नमः। ॐ उं अन्तरात्मने नमः। ॐ मं परमात्मने नमः। ॐ ह्रीं ज्ञानात्मने नमः। तत्रैव—ॐ मां मायातत्त्वाय नमः। ॐ कं कलत्त्वाय नमः। ॐ विं विद्यातत्त्वाय नमः। ॐ पं परतत्त्वाय नमः। तत्रैव—ॐ बं ब्रह्मप्रेताय नमः। ॐ विं विष्णु प्रेताय नमः। ॐ रुं रुद्र प्रेताय नमः। ॐ इं ईश्वर प्रेताय नमः। ॐ सं

**सदाशिव प्रेताय नमः।** तत्रैव—**ॐ सुधार्णवासनाय नमः। ॐ प्रेताम्बुजासनाय नमः। ॐ दिव्यासनाय नमः। ॐ चक्रासनाय नमः। ॐ सर्वयन्त्रासनाय नमः। ॐ साध्यसिद्धासनाय नमः। इति संपूज्य नव पीठशक्ती पूजयेत्।** तद्यथा—

**पूर्वाद्यष्टसु दिक्षु ॐ कामदायै नमः। ॐ मानदायै नमः। ॐ नक्तायै नमः। ॐ मधुरायै नमः। ॐ मधुराननायै नमः। ॐ नर्मदायै नमः। ॐ भोगदायै नमः। ॐ नन्दायै नमः। मध्ये ॐ प्राणदायै नमः। ॐ धूमावतीयोगपीठाय नमः।**

तदुपरान्त आचार्य—**ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञठं० समिमं दधातु। विश्वेदेवास इह मादयन्तामों ३प्रतिष्ठ॥** इस मन्त्र का उच्चारण करें तथा यजमान से '**पीठदेवता सुप्रतिष्ठिता वरदा भवन्तु।**' '**आवाहित पीठदेवताभ्यो नमः**' इसका उच्चारण करावें।

## अग्न्युत्तारणम्

**आचार्यः—देशकालौ सङ्कीर्त्य, अमुकगोत्रः अमुकशर्माऽहम् अस्यां सुवर्णमय-धूमावतीप्रतिमायाः अवघातादि दोषपरिहारार्थं देवतासान्निध्यर्थं च अग्न्युत्तारणं करिष्ये।**

इस प्रकार से संकल्प करके सुवर्ण की धूमावती देवी की प्रतिमा को चाँदी के चौड़े मुख के पात्र में रखकर उसपर घृत लगाकर दुग्धयुक्त जलधारा प्रदान करें।

## अग्न्युत्तारणमन्त्राः

**ॐ समुद्रस्य त्त्वावकयाग्ने परिव्ययामसि।**
**पावको ऽअस्मभ्यर्ठं० शिवो भव॥ १॥**

---

**भावार्थ**—हे अग्निदेव! हम जल के शैवाल से आपको परिवेष्टित करते हैं। अब आप हमारे प्रति शोधक एवं शान्त हो जाओ॥ १॥

हिमस्य त्त्वा जरायुणाग्ने परिव्ययामसि।
पावको ऽअस्मभ्यर्ठ० शिवो भव॥ २॥
उप ज्मन्नुप वेतसेऽवतर नदीष्वा।
अग्ने पित्तमपामसि मण्डूकि ताभिरागहि।
सेमं नो यज्ञं पावकवर्णर्ठ० शिवं कृधि॥ ३॥
अपामिदं न्ययनर्ठ० समुद्रस्य निवेशनम्।
अन्याँस्ते ऽअस्मत्तपन्तु हेतयः पावको अस्मभ्यर्ठ० शिवो भव ॥ ४॥
अग्ने पावक रोचिषा मन्द्रया देव जिह्वया। आ देवान्वक्षि यक्षि च ॥ ५॥
स नः पावक दीदिवोऽग्ने देवाँ२॥ इहावह उप यज्ञर्ठ० हविश्च नः॥ ६॥
पावकया यश्चितयन्त्या कृपा क्षामन् रुरुच ऽउषसो न भानुना।
तूर्वन्न यामन्नेतशस्य नू रण आ यो घृणे न ततृषाणो ऽअजरः॥ ७॥

---

**भावार्थ**—हे अग्निदेव! हिम की झिल्ली सी इस शैवाल से हम आपको परिवेष्टित करते हैं, अतः आप हमारे लिए शान्त एवं शोधक बनो॥ २॥ हे अग्निदेव! आप पृथ्वी में, वेंत की शाखा में तथा नदी के शीतल शैवाल में प्रवेश करो। हे अग्निदेव! आप तो जलों का ही तेज हैं, हे मेढुकि! आप इन शैवाल वेंत के साथ हममें प्रविष्ट हो जाओ और आप हमारे इस यज्ञ को अग्नि तुल्य तेजस्वी एवं शान्त बनाओ॥ ३॥ हे अग्निदेव! आपकी ज्वालाएँ हमारे अतिरिक्त लोगों को तापित करें। आप हमारे लिए सदैव शान्त बने रहो। क्योंकि यह प्रयोग जलों का आपूर एवं समुद्र का बड़ा स्थल है॥ ४॥ हे शोधक अग्निदेव! आप अपनी धीमी गति ज्वाला जिह्वा के साथ हमें प्राप्त होओ। इस यज्ञ में देवों को लाओ और उनका यहाँ पूजन करो॥ ५॥ हे अग्निदेव! आप देवों को यहाँ लाओ और उन्हें हमारी हवि प्रदत्त कराओ॥ ६॥ जो अग्नि अपनी शोधक और चेतना प्रदत्त करने वाली दीप्ति के द्वारा इस पृथ्वी पर सदैव प्रकाशित होता है। जिस प्रकार से प्रातःकाल अपनी दीप्ति से स्वयं शोभित होते हैं। अश्वयुद्ध में शत्रु को हिंसित करते हुए जो अग्निदेव अत्यन्त तृषित व सदैव अजर बने रहते हैं। उस अग्निदेव को हम मेढुकी, शैवाल एवं वेंतस शाखा के द्वारा प्रशमित करते हैं॥ ७॥

नमस्ते हरसे शोचिषे नमस्ते ऽअस्त्वर्चिषे।
अन्याँस्ते ऽअस्मत्तपन्तु हेतयः पावको अस्मभ्यर्ठ० शिवो भव॥ ८॥
नृषदे वेडप्सुषदे व्वेड् वर्हिषदे वेड्वनसदे वेट् स्वर्विदेवेट्॥ ९॥
ये देवा देवानां यज्ञिया यज्ञियानार्ठ० संवत्सरीणमु पभागमासते।
अहुतादो हविषो यज्ञे ऽअस्मिन्त्स्वयं पिबन्तु मधुनो घृतस्य॥ १०॥
ये देवा देवेष्वधि देवत्वमायन्न्ये ब्ब्रह्मणः पुर ऽएतारो ऽअस्य।
येब्भ्यो न ऋते पवते धाम किञ्चन न ते दिवो न पृथिव्या ऽअधि स्नुषु॥ ११॥

---

**भावार्थ**—हे अग्निदेव! आपके रसहरणशील तेज को प्रणाम है, आपकी अर्चिष् को प्रणाम है, आपकी ज्वालायें हमसे अतिरिक्त लोगों को तपावें। हे अग्निदेव! आप हमारे लिए (निरन्तर) कल्याणकारी बने रहो॥ ८॥ जठराग्नि रूप से मानवों में रहने वाले अग्निदेव के लिए यह परोक्ष रूप से आहुति है। जलों में और्वाग्नि रूप से स्थित अग्नि के लिए यह परोक्ष है। आहवनीयादि भाव से कुशों में स्थित अग्निदेव के लिए यह परोक्षाहुति है। वृक्षों में दावाग्नि भाव से स्थित अग्नि के लिए यह परोक्ष आहुति है। स्वर्गलोक में आदित्य भाव से वर्तमान अग्निदेव के लिए यह परोक्षाहुति है॥ ९॥ देवताओं के बीच में जो देवता प्रार्थना के योग्य हैं, जो यजनीय देवताओं से भी वार्षिक कर के रूप में परिपक्व अन्नादि भाग को (सदैव) प्राप्त करते हैं, वे प्राणादि देवता हमारे इस यज्ञ में प्रत्यक्ष रूप से उपस्थित होकर घृतादि का स्वयं भक्षण करें॥ १०॥ जो प्राणादि देवता इन्द्रादि देवों के शरीर में निवास कर देवत्व को प्राप्त हुए हैं। जो इस जीव के संग अग्रगामी होते हैं तथा जिनके बिना कोई भी शरीर गति को प्राप्त नहीं कर सकता। इस प्रकार के प्राणदेवता न तो स्वर्गलोक में बसते हैं और न ही पृथ्वीलोक में ही रहते हैं। ऐसे देवता तो मात्र नासिका, चक्षुः आदि आयतनों में ही निवास करते हैं॥ ११॥

**प्राणदा ऽअपानदा व्यानदा वर्चोदा वरिवोदाः। अन्याँस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यर्ठ० शिवो भव॥ १२॥**

इस प्रकार से अग्न्युत्तारण करके सुवर्णमयी धूमावती देवी की प्रतिमा को जलपात्र से बाहर निकालकर नये वस्त्र से पोंछकर यन्त्र के ऊपर रखकर प्राणप्रतिष्ठा करें।

## प्राणप्रतिष्ठा

**विनियोगः—अस्य प्राणप्रतिष्ठामन्त्रस्य ब्रह्म-विष्णु-रुद्रा ऋषयः, ऋग्यजुः सामानि छन्दांसि, क्रियामयवपुः प्राणाख्या देवता, आं बीजं, ह्रीं शक्तिः, क्रौं कीलकं श्रीधूमावतीदेव्याः प्राणप्रतिष्ठापने विनियोगः।**

तदनन्तर ऋष्यादियों का क्रम से शिर, मुख, हृदय, नाभि, गुह्य और पैरों में न्यास करे।

**ॐ ब्रह्मविष्णुरुद्रऋषिभ्यो नमः शिरसि। ॐ ऋग्यजुः सामच्छन्दोभ्यो नमः मुखे। ॐ प्राणाख्यदेवतायै नमः हृदये। ॐ आं बीजाय नमः गुह्ये। ॐ ह्रीं शक्त्यै नमः पादयोः। ॐ क्रौं कीलकाय नमः सर्वाङ्गेषु।**

करन्यासः—**ॐ अं कं खं गं घं ङंआं पृथिव्यप्तेजोवाय्वाकाशात्मने आं अङ्गुष्ठाभ्यां नमः। ॐ इं चं छं जं झं ञं शब्दस्पर्शरूपरसगन्धात्मने ईं तर्जनीभ्यां नमः। ॐ उं टं ठं डं ढं णं श्रोत्र-त्वक्-चक्षुर्जिह्वाघ्राणात्मने ॐ मध्यमाभ्यां नमः। ॐ एं तं थं दं धं नं वाक्-पाणि-पाद-पायूप-स्थात्मने ऐं अनामिकाभ्यां नमः। ॐ ओं पं फं बं भं मं वचनादान विहरणोत्सर्गानन्दाऽत्मने औं कनिष्ठिकाभ्यां नमः। ॐ अं यं रं लं वं शं षं सं हं लं ठं क्षं मनोबुद्ध्यहङ्कारचित्तात्मने अः करतलकरपृष्ठाभ्यां नमः।**

---

हे अग्निदेव! आपकी प्राणदात्री, अपानदात्री, ब्यानदात्री, ब्रह्मवर्चस् दात्री एवं धनदात्री ज्वालाएँ हमारे लिए कल्याणकारी अर्थात् मंगलमय होवें। वे हमारे अतिरिक्त (अन्य) शत्रुओं को तापित करें। हे शोधक अग्निदेव! आप हमारे लिए (निरन्तर) सदैव शान्त बने रहो॥ १२॥

हृदयादिन्यास:—ॐ अं कं खं गं घं ङं पृथिव्यप्तेजोवाय्वाकाशात्मने आं हृदयाय नमः। ॐ इं चं छं जं झं ञं शब्दस्पर्शरूपरसगन्धात्मने ईं शिरसे स्वाहा। ॐ उं टं ठं डं ढं णं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ॐ शिखायै वषट्। ॐ एं तं थं दं धं नं वाक्पाणिपादपायूपस्थात्मने ऐं कवचाय हुम्। ॐ ओं पं फं बं भं मं वचनादानविहरणोत्सर्गानन्दात्मने औं नेत्रत्रयाय वौषट्। ॐ अं यं रं लं वं शं षं सं हं लं क्षं मनोबुद्ध्यहङ्कारचित्तात्मने अः अस्त्राय फट्। एवमात्मनि मूर्तौ (देवे) च न्यासं कुर्यात्।

आचार्य भगवती धूमावती की मूर्ति का स्पर्श कर जप करें तथा शिर और हृदय का हाथ से स्पर्श कर निम्न प्राणप्रतिष्ठा के मंत्रों का उच्चारण करें—

ॐ आं, ह्रीं, क्रौं, यं, रं, लं, वं, शं, षं, सं, हं, लं, क्षं, हं, सः धूमावतीदेव्याः प्राणा इह प्राणाः। ॐ आं, ह्रीं, क्रौं, यं, रं, लं, वं, शं, षं, सं, हं, लं, क्षं, हं, सः धूमावतीदेव्याः जीव इह स्थितः। ॐ आं, ह्रीं, क्रौं, यं, रं, लं, वं, शं, षं, सं, हं, लं, क्षं, हं, सः धूमावतीदेव्याः सर्वेन्द्रियाणि। ॐ आं, ह्रीं, क्रौं, यं, रं, लं, वं, शं, षं, सं, हं, लं, क्षं, हं, सः धूमावतीदेव्याः वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानि इहैवागत्य स्वस्तये सुस्थिरं सुचिरं तिष्ठन्तु स्वाहा।

आचार्य निम्न श्लोक का उच्चारण करते हुए यजमान से हाथ जोड़वाकर धूमावती का ध्यान करावें—

ध्यानम्

धूम्राभां धूम्रवस्त्रां प्रकटितदशनां मुक्तबालाम्बराढ्यां
काकाङ्कस्यन्दनस्थां धवलकरयुगां शूर्पहस्तातिरूक्षाम्।
नित्यं क्षुत्क्षान्तदेहां मुहुरतिकुटिलां वारिवाञ्छाविचित्तां
ध्यायेद् धूमावतीं वामनयनयुगलां भीतिदां भीषणास्याम्॥ १॥

विवर्णा चञ्चला दुष्टा दीर्घा च मलिनाम्बरा।
विमुक्तकुन्तला रूक्षा विधवाविरलद्विजा॥
काकध्वजरथारूढा विलम्बितपयोधरा।
शूर्पहस्तातिरक्ताक्षीधृतहस्ता वरान्विता॥
प्रवृद्धघोणा तु भृशं कुटिला कुटिलेक्षणा।
क्षुत्पिपासार्दिता नित्यं भयदा कलहास्पदा॥ २॥

**भावार्थ**—धूम्र आभा से युक्त, धूमिल वस्त्र (अपनी देहयष्टि पर) धारण करनेवाली, बाहर दिखाई देनेवाले दाँतों से युक्त, बिखरे हुए केशों और वस्त्रों से युक्त काक (कौआ) के चिह्न से युक्त ध्वजावाले रथ पर विराजित, धवल वर्ण के दोनों हाथों वाली, हाथों में सूप धारण करनेवाली, रुक्ष शरीर-वाली, नित्य (सदैव) भूख-प्यास से आकुल विग्रह वाली, अत्यन्त कुटिल, जल की इच्छा से व्यग्र चित्तवाली, रोषयुक्त नेत्रयुगल वाली, भय देनेवाली और भयंकर मुखमण्डलवाली देवी धूमावती का (इस प्रकार) ध्यान करना चाहिए॥ १॥ खुले मुख वाली चंचल, दुष्ट, लम्बी, मलीन वस्त्रों को धारण करने वाली, खुले केशों वाली, रूक्ष, विधवा, टेढ़े-मेढ़े दाँतों वाली, कौए का ध्वज जिस रथ पर लगा हो उस पर बैठी हुई, लम्बे-लम्बे स्तनों वाली, हाथ में सूप ली हुई, अत्यन्त लाल आँखों वाली, हाथ पकड़ी हुई, वरमुद्रा से युक्त, बहुत बड़ी नाक वाली, अत्यन्त टेढ़ी, टेढ़ा देखने वाली, भूख और प्यास से व्याकुल, सदा भय देने वाली, कलहप्रिय धूमादेवी हैं॥ २॥

## वैदिकमन्त्राः

**ॐ मनो मे तर्पयत वाचं मे तर्पयत प्राणं मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रं मे तर्पयतात्मानं मे तर्पयत प्रजां मे तर्पयत पशून्मे तर्पयत गणान्मे तर्पयत गणा मे मा वितृषन्॥ १॥**

**ऐन्द्रः प्राणो अङ्गे अङ्गे निदीध्यदैन्द्र उदानो अङ्गे अङ्गे निधीतः। देवत्वष्टर्भूरि ते सꣳ समेतु सलक्ष्मा यद्विषुरूपं भवाति। देवत्रा यन्तमवसे सखायोऽनु त्वा माता पितरो मदन्तु॥ २॥**

**प्राणश्च मेऽपानश्च मे व्यानश्च मेऽसुश्च मे चित्तं च म आधीतं च मे वाक् च मे मनश्च मे चक्षुश्च मे श्रोत्रं च मे दक्षश्च मे बलं च मे यज्ञेन कल्पनन्ताम्॥ ३॥**

**प्राणं मे पाह्यपानं मे पाहिव्यानं मे पाहिचक्षुर्म उर्व्या विभाहि श्रोत्रं मे श्लोकय। अपः पिन्वौषधीर्जिन्व द्विपादव चतुष्पात्पाहि दिवो वृष्टिमेरय॥ ४॥**

**प्राणाय मे वर्चोदा वर्चसे पवस्व व्यानाय मे वर्चोदा वर्चसे पवस्वोदानाय मे वर्चोदा वर्चसे पवस्व वाचे मे वर्चोदा वर्चसे पवस्व क्रतूदक्षाभ्यां मे वर्चोदा वर्चसे पवस्व श्रोत्राय मे वर्चोदा वर्चसे पवस्व चक्षुर्भ्यां मे वर्चोदसौ वर्चसे पवेथाम्॥ ५॥**

**प्राणाय स्वाहा पानाय स्वाहा व्यानाय स्वाहा चक्षुषे स्वाहा श्रोत्राय स्वाहा वाचे स्वाहा मनसे स्वाहा॥ ६॥**

आचार्य धूमावती देवी के इस मन्त्र का उच्चारण करें—**ॐ धूम्रा बभ्रुनीकाशा पितॄणाꣳ सोमवतां बभ्रवो धूम्रनीकाशाः पितॄणां बर्हिषदां कृष्णा बभ्रुनीकाशाः पितॄणामग्निष्वात्तानां कृष्णाः पृषन्तस्त्रैयम्बकाः॥**

आचार्य इस मन्त्र और नीचे दिए हुए श्लोक का उच्चारण करें—**ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञꣳ समिमं दधातु। विश्वेदेवास इह मादयन्तामों ३ँप्रतिष्ठ॥**

**अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च।**
**अस्यै देवत्वमर्चायै स्वाहेति यजुरीरयेत्॥**

**भावार्थ**—इसके लिए प्राण प्रतिष्ठित हों, इसके लिए प्राण चलते रहें। इस पूजा के लिए देवत्व होता रहे। स्वाहा ऐसा यजुर्वेद से कहा है।

## श्रीधूमावतीपूजनम्

### ऋष्यादिन्यासः

ॐ पिप्पलादऋषये नमः शिरसि। निवृच्छन्दसे नमः मुखे। ज्येष्ठादेवतायै नमः हृदि। धूं बीजाय नमः गुह्ये। स्वाहाशक्तये नमः पादयोः। धूमावती कीलकाय नमः नाभौ। विनियोगाय नमः सर्वाङ्गे।

### करन्यासः

ॐ धूं धूं अङ्गुष्ठाभ्यां नमः। ॐ धूं तर्जनीभ्यां नमः। ॐ मां मध्यमाभ्यां नमः। ॐ वं अनामिकाभ्यां नमः। ॐ त्यैं कनिष्ठिकाभ्यां नमः। स्वाहा करतलकरपृष्ठाभ्यां नमः।

### हृदयादिषडङ्गन्यासः

ॐ धूं धूँ हृदयाय नमः। ॐ धूं शिरसे स्वाहा। ॐ मां शिखायै वषट्। ॐ वं कवचाय हुम्। ॐ त्यैं नेत्रत्रयाय वौषट्। ॐ स्वाहा अस्त्राय फट्।

ध्यानम्

धूम्राभां धूम्रवस्त्रां प्रकटितदशनां मुक्तबालाम्बराढ्यां
काकाङ्कस्यन्दनस्थां धवलकरयुगां शूर्पहस्तातिरूक्षाम्।
नित्यं क्षुत्क्षान्तदेहां मुहुरतिकुटिलां वारिवाञ्छाविचित्तां
ध्यायेद् धूमावतीं वामनयनयुगलां भीतिदां भीषणास्याम्॥ १॥

विवर्णा चञ्चला दुष्टा दीर्घा च मलिनाम्बरा।
विमुक्तकुन्तला रूक्षा विधवाविरलद्विजा॥
काकध्वजरथारूढा विलम्बितपयोधरा।
शूर्पहस्तातिरक्ताक्षीधृतहस्ता वरान्विता॥
प्रवृद्धघोणा तु भृशं कुटिला कुटिलेक्षणा।
क्षुत्पिपासार्दिता नित्यं भयदा कलहास्पदा॥ २॥

सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः ध्यायामि।

आवाहनम्

ॐ धूम्रा बभ्रुनीकाशा पितृणार्ठ० सोमवतां बभ्रवो धूम्रनीकाशाः पितृणां बर्हिषदां कृष्णा बभ्रुनीकाशाः पितृणामग्निष्वात्तानां कृष्णाः पृषन्तस्त्रैयम्बकाः ॥

ॐ सहस्त्रशीर्षा पुरुषः सहस्त्राक्षः सहस्त्रपात्।
स भूमिर्ठ० सर्वत स्पृत्वात्यतिष्ठद्दशाङ्गुलम्॥
देवेशि भक्ति सुलभे सर्वावरणसंयुते।
यावत्त्वां पूजयिष्मामि तावत् त्वं सुस्थिरा भव॥
सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, आवाहनं समर्पयामि।
आवाहनार्थे पुष्पं समर्पयामि।

आसनम्

ॐ पुरुष एवेदर्ठ० सर्वं यद्भूतं यच्च भाव्यम्।
उतामृतत्वस्येशानो यदन्नेनातिरोहति॥
अनेकरत्नसंयुक्तं नानामणिगणान्वितम्।
कार्तस्वरमयं दिव्यमासनं प्रतिगृह्यताम्॥
सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, आसनं समर्पयामि।
आसनार्थे अक्षतान् समर्पयामि।

पाद्यम्

ॐ एतावानस्य महिमातो ज्यायांश्च पूरुषः।
पादो ऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि॥
गङ्गादिसर्वतीर्थेभ्यो मया प्रार्थनयाहृतम्।
तोयमेतत् सुखस्पर्शं पाद्यार्थं प्रतिगृह्यताम्॥
सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, पाद्यं समर्पयामि।

अर्घ्यम्

ॐ त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः।
ततो विष्वङ् व्यक्रामत्साशनानशने अभि॥

गन्धपुष्पाक्षतैर्युक्तमर्घ्यं सम्पादितं मया।
गृहाण त्वं महादेवि प्रसन्ना भव सर्वदा॥

सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, अर्घ्यं समर्पयामि।

मधुपर्कम्

ॐ यन्मधुनो मधव्यं परमर्ठ० रूपमन्नाद्यम्। तेनाहं मधुनो मधव्येन परमेण रूपेणानाद्येन परमो मधव्योऽन्नादोऽसानि॥

आज्यं दधि मधु श्रेष्ठं पात्रयुग्मसमन्वितम्।
मधुपर्कं गृहाण त्वं शुभदा भव शोभने॥

सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, मधुपर्कं समर्पयामि।

आचमनीयम्

ॐ ततो विराडजायत विराजो अधि पूरुषः।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः॥

जातीलवङ्गकङ्कोल कर्पूरादिसुवासितम्।
गृहाण देवदेवेशि एतदाचमनीयकम्॥

सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, आचमनीयं जलं समर्पयामि।

स्नानम्

ॐ तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम्।
पशूंस्तांश्चक्रे वायव्यानारण्या ग्राम्याश्च ये॥

मदाकिन्याः समानीतै हेमाम्भोरुहवासितैः।
स्नानं कुरुष्व देवेशि सलिलैश्च सुगन्धिभिः॥

सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, स्नानीयं जलं समर्पयामि।

पुनराचमनीयम्

ॐ आच्या जानु दक्षिणतो निषद्येमं यज्ञमभिगृणीत विश्वे।
मा हिर्ठ०सिष्ट पितरः केनचिन्नो यद्व आगः पुरुषता कराम॥
उच्चिष्टोप्यशुचिर्वापि यस्याः स्मरणमात्रतः।
शुद्धिमाप्नोति तस्यै ते पुनराचमनीयकम्॥
सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, पुनराचमनीयं जलं समर्पयामि।

पञ्चामृतस्नानम्

ॐ पञ्च नद्यः सरस्वतीमपियन्ति सस्रोतसः।
सरस्वती तु पञ्चधा सो देशेऽभवत्सरित्॥
पयो दधि घृतं चैव मधु च शर्करान्वितम्।
पञ्चामृतं मयाऽऽनीतं स्नानार्थं प्रतिगृह्यताम्॥
सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, पञ्चामृतस्नानं समर्पयामि। शुद्धोदकस्नानं समर्पयामि। आचमनीयं जलं समर्पयामि।

गन्धोदकस्नानम्

ॐ त्वां गन्धर्वा अखनँस्त्वामिन्द्रस्त्वां बृहस्पतिः।
त्वामोषधे सोमो राजा विद्वान्यक्ष्मादमुच्यत॥
मलयाचलसम्भूतं चन्दनागुरुसम्भवम्।
चन्दनं देवि देवशि स्नानार्थं प्रतिगृह्यताम्॥
सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, गन्धोदकस्नानं समर्पयामि।
शुद्धोदकस्नानं समर्पयामि। आचमनीयं जलं समर्पयामि।

उद्वर्तनस्नानम्

ॐ अर्ठ० शुनाते अर्ठ० शुः पृच्यतां परुषा परुः।
गन्धस्ते सोममवतु मदाय रसो अच्युतः॥

**नानासुगन्धिद्रव्यं च चन्दनं रजनीयुतम्।**
**उद्वर्त्तनं मया दत्तं स्नानार्थं प्रतिगृह्यताम्॥**

सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, उद्वर्तनस्नानं समर्पयामि।
शुद्धोदकस्नानं समर्पयामि। आचमनीयं जलं समर्पयामि।

### महाभिषेकस्नानम्

आचार्य धूमावती देवी के निम्न मन्त्र और पुरुषसूक्त के मन्त्रों का उच्चारण करते हुए शंख से जलधारा उनकी प्रतिमा के ऊपर गिरवाते हुए महाभिषेक स्नान करावें।

**ॐ धूम्रा बभ्रुनीकाशा पितृणार्ठ० सोमवतां बभ्रवो धूम्रनीकाशाः पितृणां बर्हिषदां कृष्णा बभ्रुनीकाशाः पितृणामग्निष्वात्तानां कृष्णाः पृषन्तस्त्रैयम्बकाः॥** (शु०य०सं० २४/१८) अथवा **ॐ धूम्रान्वसन्ताया-लभते श्वेतान् ग्रीष्माय कृष्णान्वर्षाभ्योऽरुणाञ्छरदे पृषतो हेमन्ताय पिशङ्गाञ्छिशिराय॥** (शु०य०सं० २४/११)

**ॐ सहस्त्रशीर्षा पुरुषः सहस्त्राक्षः सहस्त्रपात्।**
**स भूमिर्ठ० सर्वत स्पृत्वात्यतिष्ठद्दशाङ्गुलम्॥**
**पुरुष एवेदर्ठ० सर्वं यद्भूतं यच्च भाव्यम्।**
**उतामृतत्वस्येशानो यदन्नेनातिरोहति॥**
**एतावानस्य महिमातो ज्यायांश्च पूरुषः।**
**पादो ऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि॥**
**त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः।**
**ततो विष्वङ् व्यक्रामत्साशनानशने अभि॥**
**ततो विराडजायत विराजो अधि पूरुषः।**
**स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः॥**
**तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम्।**
**पशूंस्तांश्चक्रे वायव्यानारण्या ग्राम्याश्च ये॥**

तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे।
छन्दार्ठ०सि जज्ञिरे तस्माद्यजुस्तस्मादजायत॥
तस्मादश्वा अजायन्त ये के चोभयादतः।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः॥
तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः।
तेन देवा अयजन्त साध्या ऋषयश्च ये॥
यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्।
मुखं किमस्यासीत्किं बाहू किमूरू पादा उच्येते॥
ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्यार्ठ० शूद्रोऽ अजायत॥
चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत॥
नाभ्या आसीदन्तरिक्षर्ठ० शीर्ष्णो द्यौः समवर्तत।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ २॥ अकल्पयन्॥
यत्पुरुषेण हविषा देवा यज्ञमतन्वत।
वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः॥
सप्तास्यासन्परिधयस्त्रिःसप्त समिधः कृताः।
देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम्॥
यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥

## शुद्धोदकस्नानम्

ॐ शुद्धवालः सर्वशुद्धवालो मणिवालस्त ऽआश्विनाः।श्येतः श्येताक्षो-ऽरुणस्ते रुद्राय पशुपतये कर्णा यामा ऽअवलिप्ता रौद्रा नभोरूपाः पार्जन्याः॥

शुद्धं यत्सलिलं दिव्यं गङ्गाजलसमं स्मृतम्।
समर्पितं मया भक्त्या स्नानार्थं प्रतिगृह्यताम्॥

सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, शुद्धोदकस्नानं समर्पयामि।
शुद्धोदकस्नानान्ते आचमनीयं जलं समर्पयामि।

वस्त्रम्

ॐ तस्माद्यज्ञात्सर्वहुतऽ ऋचः सामानि जज्ञिरे।
छन्दाꣳसि जज्ञिरे तस्माद्यजुस्तस्मादजायत॥
वस्त्रञ्च सोमदैवत्यं लज्जायास्तु निवारणम्।
मया निवेदितं भक्त्या गृहाण परमेश्वरि॥
सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, वस्त्रद्वयं समर्पयामि।
आचमनीयं जलं समर्पयामि।

यज्ञोपवीतम्

ॐ तस्मादश्वा अजायन्त ये के चोभयादतः।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः॥
स्वर्णसूत्रमयं दिव्यं ब्रह्मणा निर्मितं पुरा।
उपवीतं मया दत्तं गृहाण परमेश्वरि॥
सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, यज्ञोपवीतं समर्पयामि।
यज्ञोपवीतान्ते आचमनीयं जलं समर्पयामि।

चन्दनम्

ॐ तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः।
तेन देवा अयजन्त साध्या ऋषयश्च ये॥
श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम्।
विलेपनं च देवेशि चन्दनं प्रतिगृह्यताम्॥
सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, चन्दनं समर्पयामि।

अक्षतान्

ॐ अक्षन्नमीमदन्त ह्यव प्रिया अधूषत। अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजान्विन्द्रते हरी॥

अक्षतान् निमलान् दिव्यान् कुङ्कुमाक्तान् सुशोभनान्।
गृहाणेमान् महादेवि प्रसीद परमेश्वरि॥
सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, अक्षतान् समर्पयामि।

पुष्पमालाम्

ॐ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्।
मुखं किमस्यासीत्किं बाहू किमूरू पादा उच्येते॥
पद्म - शङ्खज - पुष्पादिक्षतपत्रैर्विचित्रताम्।
पुष्पमालां प्रयच्छामि गृहाण त्वं परमेश्वरि॥
सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, पुष्पमालां समर्पयामि।

बिल्वपत्राणि

ॐ नमो बिल्मिने च कवचिने च नमो वर्मिणे च वरूथिने च नमः।
श्रुताय च श्रुतसेनाय च नमो दुन्दुभ्याय चाहनन्याय च॥
अमृतोद्भवः श्रीवृक्षो महादेवप्रियः सदा।
बिल्वपत्रं प्रयच्छामि पवित्रं ते परमेश्वरि॥
सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, बिल्वपत्राणि समर्पयामि।

दूर्वाङ्कुरान्

ॐ काण्डात्काण्डात् प्ररोहन्ती परुषः परुषस्परि।
एवा नो दूर्वे प्रतनु सहस्रेण शतेन च॥
विष्ण्वादिसर्वदेवानां प्रियपत्रां सुशोभनीम्।
क्षीरसागरसम्भूतां दूर्वां स्वीकुरु सर्वदा॥
सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, दूर्वाङ्कुरान् समर्पयामि।

तुलसीदलम्

ॐ इदं विष्णु र्विचक्रमे त्रेधा निदधेपद्म।
समूढमस्य पार्ठ० सुरे स्वाहा॥

तुलसीं हेमरूपां च रत्नरूपां च मञ्जरीम्।
भवमोक्षप्रदां तुभ्यमर्पयामि हरिप्रियाम्॥
सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, तुलसीदलं समर्पयामि।

नानाआभूषणम्

ॐ युवं तमिन्द्रापर्वता पुरोयुधा यो नः पृतन्यादपतन्तमिद्धतं वज्रेण तन्तमिद्धतम्। दूरे चत्ताय छन्त्सद् गहनं यदिनक्षत्॥
हार-कङ्कण-केयूर-मेखला-कुण्डलादिभिः ।
रत्नाढ्यं कुण्डलोपेतं भूषणं प्रतिगृह्यताम्॥
सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, नानाआभूषणं समर्पयामि।

सुगन्धिद्रव्यम्

ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमाऽमृतात्॥
चन्दनागुरुकर्पूरैः संयुतं कुङ्कुमं तथा।
कस्तूर्यादिसुगन्धांश्च सर्वाङ्गेषु विलेपनम्॥
सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, सुगन्धिद्रव्यं समर्पयामि।

## आवरणपूजनम्

ॐ संविन्मये परे देवि परामृतरसप्रिये।
अनुज्ञां देहि मातस्त्वं परिवारार्चनाय मे॥

इति पठित्वा पुष्पाञ्जलिं दद्यात्। इत्याज्ञां गृहीत्वा षट्कोणकेसरेषु आग्नेय्यादिचतुर्दिक्षु मध्ये दिक्षु च षडङ्गानि पूजयेत्। तद्यथा—ॐ धूं धूं हृदयाय नमः। हृदयश्रीपादुकां पूजयामि तर्पयामि नमः। इति सर्वत्र॥ १॥ ॐ धूं शिरसे स्वाहा। शिरःश्रीपादुकां पूजयामि तर्पयामि नमः॥ २॥ ॐ मां शिखायै वषट्। शिखाश्रीपादुकां पूजयामि तर्पयामि नमः॥ ३॥ ॐ वं नमः कवचाय हुं। कवचश्रीपादुकां पूजयामि तर्पयामि नमः॥ ४॥

ॐ तिं नेत्रत्रयाय वषट्। नेत्रत्रयश्रीपादुकां पूजयामि तर्पयामि नमः ॥ ५ ॥
ॐ स्वाहा अस्त्राय फट्। अस्त्रश्रीपादुकां पूजयामि तर्पयामि नमः ॥ ६ ॥
इति षडङ्गानि पूजयेत्। ततः पुष्पाञ्जलिमादाय मूलमुच्चार्य—

ॐ अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम्॥

इति पठित्वा पुष्पांजलिं च दत्त्वा पूजितास्तर्पिताः सन्तु इति वदेत्॥
इति प्रथमावरणम्॥

द्वितीयावरणार्चनम्—ततोऽष्टदले पूज्यपूजकयोरन्तराले प्राचीं तदनुसारेण अन्याः दिशः प्रकल्प्य प्राचीक्रमेण ॐ क्षुधायै नमः। क्षुधाश्रीपादुकां पूजयामि तर्पयामि नमः ॥ १ ॥ ॐ तृष्णायै नमः। तृष्णाश्रीपादुकां पूजयामि तर्पयामि नमः ॥ २ ॥ ॐ रत्यै नमः। रतिश्रीपादुकां पूजयामि तर्पयामि नमः ॥ ३ ॥ ॐ निद्रायै नमः। निद्राश्रीपादुकां पूजयामि तर्पयामि नमः ॥ ४ ॥ ॐ निर्ऋत्यै नमः। निर्ऋतिश्रीपादुकां पूजयामि तर्पयामि नमः ॥ ५ ॥ ॐ दुर्गत्यै नमः। दुर्गतिश्रीपादुकां पूजयामि तर्पयामि नमः ॥ ६ ॥ ॐ रुषायै नमः। रुषश्रीपादुकां पूजयामि तर्पयामि नमः ॥ ७ ॥ ॐ अक्षमायै नमः। अक्षमाश्रीपादुकां पूजयामि तर्पयामि नमः ॥ ८ ॥ इत्यष्टौ शक्तिः पूजयित्वा पुष्पाञ्जलिं दद्यात्। इति पूजयेत्।

ॐ अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम्॥

पूर्व दिशायाम्—ॐ लं इन्द्राय नमः। इन्द्र श्रीपादुकां पूजयामि तर्पयामि नमः। आग्नेय कोणेषु—ॐ रं अग्नये तेजोऽधिपतये नमः। अग्नि श्रीपादुकां पूजयामि तर्पयामि नमः। दक्षिण दिशायाम्—ॐ मं यमाय नमः। यम श्रीपादुकां पूजयामि तर्पयामि नमः। नैर्ऋत्य कोणेषु—ॐ क्षं निर्ऋतिये नमः। निर्ऋति श्रीपादुकां पूजयामि तर्पयामि नमः। पश्चिम दिशायाम्—ॐ वं वरुणाय नमः। वरुण श्रीपादुकां पूजयामि तर्पयामि

नमः ।वायव्य कोणेषु—ॐ यं वायवे नमः ।वायु श्रीपादुकां पूजयामि तर्पयामि नमः । उत्तर दिशायाम्—ॐ सं सोमाय नमः । सोम श्रीपादुकां पूजयामि तर्पयामि नमः । ईशान कोणेषु—ॐ हं ईशान्ये नमः । ईशान श्रीपादुकां पूजयामि तर्पयामि नमः । इन्द्र च ईशान मध्यभागे—ॐ आं ब्रह्मणे नमः । ब्रह्म श्रीपादुकां पूजयामि तर्पयामि नमः । वरुण च निर्ऋति मध्यभागे—ॐ ह्रीं अनन्ताय नमः । अनन्त श्रीपादुकां पूजयामि तर्पयामि नमः ।

तदुपरान्त इन्द्रादि दिक्पालों के पास उनके आयुधों का पूजन और तर्पण निम्न नाममंत्रों द्वारा करें—

इन्द्र समीपे—ॐ वं व्रजाय नमः । वज्र श्रीपादुकां पूजयामि तर्पयामि नमः । अग्नि समीपे—ॐ शं शक्तये नमः । शक्ति श्रीपादुकां पूजयामि तर्पयामि नमः ।यम समीपे—ॐ दं दण्डाय नमः ।दण्ड श्रीपादुकां पूजयामि तर्पयामि नमः ।निर्ऋति समीपे—ॐ खं खड्गाय नमः ।खड्ग श्रीपादुकां पूजयामि तर्पयामि नमः । वरुण समीपे—ॐ पां पाशाय नमः । पाश श्रीपादुकां पूजयामि तर्पयामि नमः ।वायु समीपे—ॐ अं अंकुशाय नमः । अंकुश श्रीपादुकां पूजयामि तर्पयामि नमः । सोम समीपे—ॐ गं गदाय नमः । गदा श्रीपादुकां पूजयामि तर्पयामि नमः । ईशान समीपे—ॐ शूं शूलाय नमः ।शूल श्रीपादुकां पूजयामि तर्पयामि नमः । ब्रह्मणे समीपे—ॐ पं पद्माय नमः ।पद्म श्रीपादुकां पूजयामि तर्पयामि नमः ।अनन्त समीपे—ॐ चं चक्राय नमः ।चक्र श्रीपादुकां पूजयामि तर्पयामि नमः ।इति पूजयेत्।

ॐ अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं समस्तावरणार्चनम्।।

इति मन्त्रेण पुष्पाञ्जलिं दद्यात्।

द्वितीयावरणदेवताभ्यो नमः। (समस्तावरणदेवताभ्यो नमः) पुष्पाञ्जलिं समर्पयामि। अनया पूजया समस्तावरणदेवताः प्रीयन्तां न मम।

## धूमावत्यष्टोत्तरशतनामभिस्तुलसी-दूर्वा-अक्षतादिभिः पूजयेत्

१. ॐ धूमावत्यै नमः।
२. ॐ धूम्रवर्णायै नमः।
३. ॐ धूम्रपानपरायणायै नमः।
४. ॐ धूम्राक्षमथिन्यै नमः।
५. ॐ धन्यायै नमः।
६. ॐ धन्यस्थाननिवासिन्यै नमः।
७. ॐ अघोराचारसन्तुष्टायै नमः।
८. ॐ अघोराचारमण्डितायै नमः।
९. ॐ अघोरमन्त्रसम्प्रीतायै नमः।
१०. ॐ अघोरमन्त्रपूजितायै नमः।
११. ॐ अट्टाट्टहासनिरतायै नमः।
१२. ॐ मलिनाम्बरधारिण्यै नमः।
१३. ॐ वृद्धायै नमः।
१४. ॐ विरूपायै नमः।
१५. ॐ विधवायै नमः।
१६. ॐ विद्यायै नमः।
१७. ॐ विरलद्विजायै नमः।
१८. ॐ प्रवृद्धघोणायै नमः।
१९. ॐ कुमुख्यै नमः।
२०. ॐ कुटिलायै नमः।
२१. ॐ कुटिलेक्षणायै नमः।
२२. ॐ कराल्यै नमः।
२३. ॐ करालास्यायै नमः।
२४. ॐ कङ्काल्यै नमः।
२५. ॐ शूर्पधारिण्यै नमः।
२६. ॐ काकध्वजरथारूढायै नमः।
२७. ॐ केवलायै नमः।
२८. ॐ कठिनायै नमः।
२९. ॐ कुह्वै नमः।
३०. ॐ क्षुत्पिपासार्दितायै नमः।
३१. ॐ नित्यायै नमः।
३२. ॐ ललज्जिह्वायै नमः।
३३. ॐ दिगम्बर्यै नमः।
३४. ॐ दिर्घोदर्यै नमः।
३५. ॐ दिर्घरवायै नमः।
३६. ॐ दिर्घाङ्ग्यै नमः।
३७. ॐ दीर्घमस्तकायै नमः।
३८. ॐ विमुक्तकुन्तलायै नमः।
३९. ॐ कीर्त्यायै नमः।
४०. ॐ कैलासस्थानवासिन्यै नमः।
४१. ॐ क्रूरायै नमः।
४२. ॐ कालस्वरूपायै नमः।
४३. ॐ कालचक्रप्रवर्तिन्यै नमः।
४४. ॐ विवर्णायै नमः।
४५. ॐ चञ्चलायै नमः।
४६. ॐ दुष्टायै नमः।
४७. ॐ दुष्टविध्वंसकारिण्यै नमः।
४८. ॐ चण्ड्यै नमः।
४९. ॐ चण्डस्वरूपायै नमः।
५०. ॐ चामुण्डायै नमः।
५१. ॐ चण्डनिःस्वनायै नमः।
५२. ॐ चण्डवेगायै नमः।

५३. ॐ चण्डगत्यै नमः।
५४. ॐ चण्डविनाशिन्यै नमः।
५५. ॐ मुण्डविनाशिन्यै नमः।
५६. ॐ चाण्डालिन्यै नमः।
५७. ॐ चित्ररेखायै नमः।
५८. ॐ चित्राङ्ग्यै नमः।
५९. ॐ चित्ररूपिण्यै नमः।
६०. ॐ कृष्णायै नमः।
६१. ॐ कपर्दिन्यै नमः।
६२. ॐ कुल्लायै नमः।
६३. ॐ कृष्णारूपायै नमः।
६४. ॐ क्रियावत्यै नमः।
६५. ॐ कुम्भस्तन्यै नमः।
६६. ॐ महोन्मत्तायै नमः।
६७. ॐ मदिरापानविह्वलायै नमः।
६८. ॐ चतुर्भुजायै नमः।
६९. ॐ ललज्जिह्वायै नमः।
७०. ॐ शत्रुसंहारकारिण्यै नमः।
७१. ॐ शवारूढायै नमः।
७२. ॐ शवगतायै नमः।
७३. ॐ श्मशानस्थानवासिन्यै नमः।
७४. ॐ दुराराध्यायै नमः।
७५. ॐ दुराचारायै नमः।
७६. ॐ दुर्जनप्रीतिदायिन्यै नमः।
७७. ॐ निर्मांसायै नमः।
७८. ॐ निराकारायै नमः।
७९. ॐ धूमहस्तायै नमः।
८०. ॐ वरान्वितायै नमः।
८१. ॐ कलहायै नमः।
८२. ॐ कलिप्रीतायै नमः।
८३. ॐ कलिकल्मषनाशिन्यै नमः।
८४. ॐ महाकालस्वरूपायै नमः।
८५. ॐ महाकालप्रपूजितायै नमः।
८६. ॐ महादेवप्रियायै नमः।
८७. ॐ मेधायै नमः।
८८. ॐ महासङ्कटनाशिन्यै नमः।
८९. ॐ भक्तप्रियायै नमः।
९०. ॐ भक्तगत्यै नमः।
९१. ॐ भक्तशत्रुविनाशिन्यै नमः।
९२. ॐ भैरव्यै नमः।
९३. ॐ भुवनायै नमः।
९४. ॐ भीमायै नमः।
९५. ॐ भारत्यै नमः।
९६. ॐ भुवनात्मिकायै नमः।
९७. ॐ भेरुण्डायै नमः।
९८. ॐ भीमनयनायै नमः।
९९. ॐ त्रिनेत्रायै नमः।
१००. ॐ बहुरूपिण्यै नमः।
१०१. ॐ त्रिलोकेश्यै नमः।
१०२. ॐ त्रिकालज्ञायै नमः।
१०३. ॐ त्रिस्वरूपायै नमः।
१०४. ॐ त्रयीतनवे नमः।
१०५. ॐ त्रिमूर्त्यै नमः।
१०६. ॐ तन्व्यै नमः।
१०७. ॐ त्रिशक्त्यै नमः।
१०८. ॐ त्रिशूलिन्यै नमः।

धूपम्

ॐ ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्यार्ठ० शूद्रोऽ अजायत॥
दशाङ्गगुग्गुलं धूपं चन्दनागुरुसंयुतम्।
समर्पितं मया भक्त्या महादेवि प्रगृह्यताम्॥
सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, धूपमाघ्रापयामि।

दीपम्

ॐ चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत॥
घृतवर्तिसमायुक्तं महातेजो महोज्ज्वलम्।
दीपं दास्यामि देवेशि सुप्रीता भव सर्वदा॥
सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, दीपं दर्शयामि। हस्त प्रक्षालनम्।

नैवेद्यम्

ॐ नाभ्या आसीदन्तरिक्षर्ठ० शीर्ष्णो द्यौः समवर्तत।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ २॥ अकल्पयन्॥
अन्नं बहुविधं स्वादु रसैः षड्भिः समन्वितम्।
नैवेद्यं गृह्यतां देवि भक्तिं मे ह्यचलां कुरु॥
सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, नैवेद्यं निवेदयामि। मध्ये आचमनीयं जलं समर्पयामि। उत्तरापोशनार्थे पुनर्नैवेद्य निवेदयामि। हस्तप्रक्षालनार्थे मुखप्रक्षालनार्थे च जलं समर्पयामि। पुनराचमनीयं जलं समर्पयामि।

करोद्वर्त्तनम्

ॐ अर्ठ० शुनाते अर्ठ० शुः पृच्यतां परुषापरुः।
गन्धस्ते सोममवतु मदाय रसो अच्युतः॥

**करोद्वर्त्तनकं देवि! सुगन्धैः परिवासितैः।**
**गृहीत्वा मे वरं देहि परत्र च परां गतिम्॥**

सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, करोद्वर्त्तनार्थे गन्धं समर्पयामि।
हस्तप्रक्षालनार्थं जलं समर्पयामि।

ऋतुफलम्

**ॐ याः फलिनीर्या अफला अपुष्पायाश्च पुष्पिणीः।**
**बृहस्पतिप्रसूतास्तानो मुञ्चन्त्वर्ठ० हसः॥**
**नारिकेलं च नारिङ्गं कलिङ्गं मञ्जिरं तथा।**
**उर्वारुकं च देवेशि फलान्येतानि गृह्यताम्॥**

सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, ऋतुफलं समर्पयामि।

ताम्बूलम्

**ॐ यत्पुरुषेण हविषा देवा यज्ञमतन्वत।**
**वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः॥**
**एला-लवङ्ग-कस्तूरी-कर्पूरैः पुष्पवासिताम्।**
**वीटिकां मुखवासार्थमर्पयामि परमेश्वरि॥**

सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, मुखवासार्थं ताम्बूलं (पूगफल-एला-लवङ्गसहितम्) समर्पयामि।

दक्षिणाम्

**ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्।**
**स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम्॥**
**पूजाफलसमृद्ध्यर्थं तवाग्रे परमेश्वरि।**
**अर्पितं तेन मे प्रीता पूर्णान् कुरु मनोरथान्॥**

सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, दक्षिणां समर्पयामि।

कर्पूरनीराजनम्

ॐ इदर्ठ० हविः प्रजननं मे अस्तु दशवीरर्ठ० सर्वगणर्ठ० स्वस्तये। आत्मसनि प्रजासनि पशुसनि लोकसन्यभयसनि। अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धत्त॥

कर्पूरनिर्मितं दीपं स्वर्णपात्रे निवेशितम्।
नीराजनं मया दत्तं गृहाण परमेश्वरि॥
कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम्।
सदा वसन्तं हृदयारविन्दे भवं भवानीसहितं नमामि॥

सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, कर्पूरनीराजनं समर्पयामि।

मन्त्रपुष्पाञ्जलिम्

ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥

ॐ राजाधिराजाय प्रसह्य साहिने। नमो वयं वैश्रवणाय कुर्महे। स मे कामान् कामकामाय मह्यम्। कामेश्वरो वैश्रवणो ददातु। कुबेराय वैश्रवणाय महाराजाय नमः॥

ॐ स्वस्ति! साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यमयं समन्तपर्यायी स्यात्, सार्वभौमः सार्व्वायुष आन्तादापरार्धात्, पृथिव्यै समुद्रपर्यन्ताया एकराडिति॥

तदप्येष श्लोकोऽभिगीतो मरुतः परिवेष्टारो मरुत्तस्यावसन् गृहे। आविक्षितस्य कामप्रेर्विश्वेदेवाः सभासद इति॥

ॐ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्।
सं बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन् देव एकः॥

नानासुगन्धयुक्तं च यथाकालोद्भवं तथा।
मया पुष्पाञ्जलिर्दत्ता गृहाण परमेश्वरि॥

ॐ धूमावत्यै च विद्महे संहारिण्यै च धीमहि। तन्नो धूमा प्रचोदयात्।

सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, मन्त्रपुष्पाजलिं समर्पयामि।

प्रदक्षिणाम्

ॐ ये तीर्थानि प्रचरन्ति सृकाहस्ता निषङ्गिणः।
तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि॥

कायवाङ्मानसं पापं यत्कृतं जन्मजन्मनि।
तन्मे नाशय देवि त्वं प्रदक्षिणविधानतः॥
यानि कानि च पापानि ज्ञाताज्ञातकृतानि च।
तानि सर्वाणि नश्यन्ति प्रदक्षिणापदे पदे॥

सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, प्रदक्षिणां समर्पयामि।

स्तुतिः

कल्पादौ या कालिकाद्याऽचीकलन्मधुकैटभौ।
कल्पान्ते त्रिजगत्सर्वं धूमावतीं भजामि ताम्॥ १॥
गुणागाराऽगम्यगुणा या गुणागुणवर्धिनी।
गीता वेदार्थतत्त्वज्ञैर्धूमावतीं भजामि ताम्॥ २॥
खट्वाङ्गधारिणी खर्वाखण्डिनी खलरक्षसाम्।
धारिणी खेटकस्यापि धूमावतीं भजामि ताम्॥ ३॥
घूर्णाघूर्णकरा घोरा घूर्णिताक्षी घनस्वना।
घातिनी घातकानां या धूमावतीं भजामि ताम्॥ ४॥
चर्वन्तीमस्थिखण्डानां चण्ड-मुण्डविदारिणीम्।
चण्डाट्टहासिनीं देवीं भजे धूमावतीमहम्॥ ५॥
छिन्नग्रीवां क्षताच्छन्नां छिन्नमस्तस्वरूपिणीम्।
छेदिनीं दुष्टसङ्घानां भजे धूमावतीमहम्॥ ६॥
जाता या याचिता देवैरसुराणां विघातिनी।
जल्पन्ती बहु गर्जन्ती भजे तां धूम्ररूपिणीम्॥ ७॥

सर्वशक्तियुक्तायै श्रीधूमावत्यै नमः, स्तुतिं समर्पयामि।

॥ इति धूमावतीपूजनम्॥

# धूमावतीहवनविधिः

यजमान अपनी पत्नी के साथ हवनकुण्ड अथवा स्थण्डिल के पास आकर आसन पर पूर्वाभिमुख बैठे। निम्न मंत्र का उच्चारण करते हुए यजमान के मस्तक पर आचार्य तिलक करें—

**ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः।**
**स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥**

आचार्य निम्न तीन नामों का उच्चारण करते हुए यजमान से तीन बार आचमन करावें—**ॐ केशवाय नमः ॐ नारायणाय नमः ॐ माधवाय नमः।**

पुनः आचार्य **ॐ ऋषिकेशाय नमः, ॐ गोविन्दाय नमः।** का उच्चारण करके यजमान के दोनों हाथो को शुद्ध जल से धुलवायें।

आचार्य निम्न श्लोक का उच्चारण करके यजमान के ऊपर और हवन सामग्री की पवित्रता हेतु कुशा से जल छिड़कें—

**ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा।**
**यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः॥**
**ॐ पुण्डरीकाक्षः पुनातु, ॐ पुण्डरीकाक्षः पुनातु, ॐ पुण्डरीकाक्षः पुनातु।**

आचार्य निम्न मंत्र का उच्चारण करके यजमान को कुशा की पवित्री धारण करवाके प्राणायाम करावें—**ॐ पवित्रे स्थो वैष्णव्यौ सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः॥ तस्य ते पवित्रपते पवित्र पूतस्य यत्कामः पुने तच्छकेयम्॥**

प्राणायाम के उपरान्त आचार्य और ब्राह्मण स्वस्तिवाचन के मंत्रों का उच्चारण करें।

## हवनसङ्कल्पः

यजमानः स्वदक्षिणहस्ते जलाऽक्षत-द्रव्यं चादाय, सङ्कल्पं कुर्यात्—ॐ विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य श्रीब्रह्मणोऽह्नि द्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलि-प्रथमचरणे जम्बूद्वीपे भरतखण्डे भारतवर्षे आर्यावर्तैकदेशे, अमुकक्षेत्रे अमुकनद्या अमुकतीरे विक्रमशके बौद्धावतारे अमुकनाम्नि संवत्सरे अमुकायने अमुकऋतौ महामाङ्गल्यप्रदमासोत्तमे मासे अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते सूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथास्थानस्थितेषु सत्सु एवं गुणगणविशेषण-विशिष्टायां शुभपुण्यतिथौ अमुकगोत्रोऽमुकशर्माहं (वर्माऽहम्, गुप्तोऽहम्, दासोऽहम्) श्रीधूमावतीप्रीत्यर्थं मम इह जन्मनि जन्मान्तरे वा कृतानां कायिक-वाचिक-मानसिक-सांसर्गिक-सर्वविधपापानां निवृत्तिपूर्वकं दीर्घायु-रारोग्यप्राप्तिपूर्वकं पुत्रपौत्राद्यभिवृद्धिपूर्वकं धमार्थ-काम-मोक्ष चतुर्विध-पुरुषार्थसिद्ध्यर्थं हवनं करिष्ये।

## एकतन्त्रेण वरणसंकल्पः

यजमानः स्वदक्षिणहस्ते जलाऽक्षत-द्रव्यं चादाय, सङ्कल्पं कुर्यात्—ॐ विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य श्रीब्रह्मणोऽह्नि द्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे जम्बूद्वीपे भरतखण्डे भारतवर्षे आर्यावर्तैकदेशे, अमुकक्षेत्रे अमुकनद्या अमुकतीरे विक्रमशके बौद्धावतारे अमुकनाम्नि संवत्सरे अमुकायने अमुकऋतौ महामाङ्गल्यप्रदमासोत्तमे मासे

अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते सूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथास्थानस्थितेषु सत्सु एवं गुणगणविशेषणविशिष्टायां शुभपुण्यतिथौ अमुकगोत्रोऽमुकशर्माहं (वर्माऽहम्, गुप्तोऽहम्, दासोऽहम्) अस्मिन् धूमावतीहवनकर्मणि एभिर्वरणद्रव्यैः नानानामगोत्रान् नानानामधेयान् शर्मणः आचार्यादि-ब्राह्मणान् युष्मान् वृणे।

## अथाग्निस्थापनम्

ततः कुण्डे उपरि मेखलायां श्वेतवर्णालङ्कृतायां विष्णुं पूजयेत्। तद्यथा—ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्यपार्ठ० सुरे स्वाहा॥ ॐ भूर्भुवः स्वः विष्णवे नमः, विष्णुमावाहयामि स्थापयामि॥

ततो मध्यमेखलायां रक्तवर्णालङ्कृतायां ब्रह्माणं पूजयेत्—ॐ ब्रह्म यज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः। स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः॥ ॐ भूर्भुवः स्वः ब्रह्मणे नमः, ब्रह्माणमावाहयामि स्थापयामि॥

तत अधोमेखलायां कृष्णवर्णालङ्कृतायां रुद्रं पूजयेत्—ॐ नमस्ते रुद्र मन्यव उतोत इषवे नमः। बाहुभ्यामुत ते नमः॥ ॐ भूर्भुवः स्वः रुद्राय नमः, रुद्रमावाहयामि स्थापयामि॥

ततो योन्यां रक्तवर्णालङ्कृतायां गौरीं पूजयेत्—ॐ अम्बेऽअम्बिके-ऽम्बालिके न मा नयति कश्चन। ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम्॥ ॐ भूर्भुवः स्वः गौर्यै नमः गौरीमावाहयामि स्थापयामि॥

कण्ठे—ॐ नीलग्रीवाः शितिकण्ठा दिवर्ठ० रुद्रा उपश्रिताः। तेषार्ठ० सहस्रयोजनेऽव धन्वानि तन्मसि॥ ॐ कण्ठे नमः कण्ठ-मावाहयामि स्थापयामि॥

नाभिम्—ॐ नाभिर्मे चित्तं विज्ञानं पायुर्मेऽपचितिर्भसत्। आनन्द-नन्दावाण्डौ मे भगः सौभाग्यं पसः। जङ्घाभ्यां पद्भ्यां धर्म्मोऽस्मि विशि राजा प्रतिष्ठितः॥ ॐ नाभ्यै नमः नाभिमावाहयामि स्थापयामि॥

ॐ विश्वकर्मन्हविषा वर्धनेन त्रातारमिन्द्रमकृणोरवध्यम्। तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथासत्॥ ॐ भूर्भुवः स्वः विश्वकर्मणे नमः, विश्वकर्माणमावाहयामि स्थापयामि॥

तत आचार्यः अग्न्यायतनस्य पश्चात्प्राङ्मुखोपविश्याचम्य प्राणा-नायम्य देशकालौ संकीर्त्य, अमुकगोत्रः अमुकशर्माऽहं (वर्माऽहम्, गुप्तोऽहम्, दासोऽहम्) सपत्नीकोऽहं अस्मिन्सनवग्रहमखे धूमावती-हवनकर्मणि पंचभूसंस्कारपूर्वकं शतमङ्गलनामाग्निस्थापनं करिष्ये।

तत्र पञ्चभूसंस्कारः—दर्भैः परिसमूह्य तान्कुशानैशान्यां परित्यज्य। गोमयोदकाभ्यामुपलिप्य। स्फ्येन स्रुवमूलेन वा उल्लिख्य। उल्लेखन क्रमेणानामिकाङ्गुष्ठाभ्यां मृदमुद्धृत्य उदकेनाभ्युक्ष्य ततः कुण्डे सुवर्ण-खण्डं निक्षिप्य वस्त्रेणाच्छाद्य। इसके बाद अरणी प्रदान करें।

तद्यथा—स्मार्त्ताग्निसाधनभूते योनिरूपे इमे अरणी युवाभ्यां प्रतिगृह्यताम्। इयमधरा। इयमुत्तरा॥ ततो यजमानः तौ स्मार्ताग्निसाधनभूते इमे अरणी आवाभ्यां परिगृहाण॥ ततो ब्रह्मा॥ इदं चात्र॥ इदमोवलीं इदं नेत्रम्॥ इमानि स्रुवादीनि पात्राणि प्रतिगृहाण॥ ततो यजमानः इमानि स्रुवादीनि पात्राणि प्रतिगृह्णामि। पत्नी तु यजमानहस्तादधरारणिमंके निदधाति। यजमानोऽप्यंके उत्तरारणिं निदधाति। उभावप्यरण्योः पूजां कुरुतः। तद्यथा—प्राग्ग्रीवमुत्तरलोम कृष्णाजिनं कम्बलोपरि आस्तीर्य तस्योपरि उदगग्राम धरारणिं निधाय। तत्पूर्वं उत्तरारणिं च निधाय ॐ युवाभ्यामरणीभ्यां नमः इति संपूज्य। ततो अधरारण्यामुक्तप्रदेशे प्रमंथमूलं निधाय चात्राग्रे चोवलिमुदगग्रां च नेत्रेण चात्रं त्रिर्वेष्टयित्वा गाढं धृत्वा पश्चिमाभिमुखोपविष्टया पत्न्या

मंथयेत्। यावदग्नेरुत्पत्तिः। पत्न्या मंथनासामर्थ्ये अन्ये ब्राह्मणाः शुचयो मथ्नन्ति। एवं यजमानासामर्थ्ये अन्यो यंत्रं धारयति। ततो यातमग्निं मृण्मयपात्रे शुष्कगोमयचूर्णं नारिकेलजटां च स्थापयित्वा तस्मिन्पात्रे अग्निमाहृत्य वेणुनलिकया प्रज्वालयेत्। तत्र मन्त्राः—

ॐ समास्त्वाग्न ऋतवो वर्धयन्तु संवत्सरा ऋषयो यानि सत्या। सं दिव्येन दीदिहि रोचनेन विश्वा आभाहि प्रदिशश्चतस्त्रः॥ १॥ सं चेद्धयस्वाग्ने प्र च बोधयैनमुच्च तिष्ठ महते सौभगाय। मा च रिषदुपसत्ता ते अग्ने ब्रह्माणस्ते यशसः सन्तु मान्ये॥ २॥ त्वामग्ने वृणते ब्राह्मणा इमे शिवो अग्ने संवरणे भवा नः। सपत्नहा नो अभिमातिजिच्च स्वे गये जागृह्यप्रयुच्छन्॥ ३॥ इहैवाग्ने अधि धारया रयिं मा त्वा निक्रन्पूर्वचितो निकारिणः। क्षत्रमग्ने सुयममस्तु तुभ्यमुपसत्ता वर्धतां ते अनिष्टृतः॥ ४॥ क्षत्रेणाग्ने स्वायुः सर्ठ०रभस्व मित्रेणाग्ने मित्रधेये यतस्व। सजातानां मध्यमस्था एधि राज्ञामग्ने विहंव्यो दीदिहीह॥ ५॥ अति निहो अति स्त्रिधोऽत्यचित्तिमत्यरातिमग्ने। विश्वा ह्यग्ने दुरिता सहस्वाथास्मभ्यर्ठ० सहवीरार्ठ० रयिं दाः॥ ६॥ अनाधृष्यो जातवेदा अनिष्टृतो विराडग्ने क्षत्रभृद्दीदिहीह। विश्वा आशाः प्रमुञ्चन्मानुषीर्भियः शिवेभिरद्य परिपाहि नो वृधे॥ ७॥ बृहस्पते सवितर्बोधयैनर्ठ० सर्ठ०शितं चित्संतरार्ठ० सर्ठ०शिशाधि। वर्धयैनं महते सौभगाय विश्व एनमनुमदन्तु देवाः॥ ८॥ अमुत्रभूयादध यदद्यस्य बृहस्पते अभिशस्तेरमुञ्चः। प्रत्यौहतामश्विना मृत्युमस्ववाद्देवानामग्ने भिषजा शचीभिः॥ ९॥ उद्वयं तमसस्परि स्वः पश्यन्त उत्तरम्। देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्॥ १०॥ ऊर्ध्वा अस्य समिधो भवन्त्यूर्ध्वा शुक्रा शोचीर्ठ०ष्यग्नेः। द्युमत्तमा सुप्रतीकस्य सूनोः॥ ११॥ तनूनपादसुरो विश्ववेदा देवो देवेषु देवः। पथो अनक्तु मध्वा घृतेन॥ १२॥ मध्वा यज्ञं नक्षसे प्रीणानो नराशर्ठ०सो अग्ने। सुकृद्देवः सविता विश्ववारः॥ १३॥ अच्छायमेति शवसा घृतेनेडानो

वह्निर्नमसा। अग्निर्ठ० स्त्रुचो अध्वरेषु प्रत्यसु॥ १४॥ स यक्षदस्य महिमानमग्नेः स ई मन्द्रा सुप्रयसः। वसुश्चेतिष्ठो वसुधातमश्च॥ १५॥ द्वारो देवीरन्वस्य विश्वे व्रता ददन्ते अग्नेः। उरुव्यचसो धा पत्यमानाः॥ १६॥ ते अस्य योषणे दिव्ये न योना उषासानक्ता इमं यज्ञमवतामध्वरं नः॥ १७॥ दैव्या होतारा ऊर्ध्वमध्वरं नोऽग्नेर्जिह्वामभिगृणीतम्। कृणुतं नः स्विष्टिम्॥ १८॥ तिस्रो देवीर्बर्हिरेदर्ठ० सदन्त्विडा सरस्वती भारती। मही गृणाना॥ १९॥ तन्नस्तुरीपमद्भुतं पुरुक्षु त्वष्टा सुवीर्यम्। रायस्पोषं विष्यतु नाभिमस्मे॥ २०॥ वनस्पतेऽवसृजा रराणस्त्मना देवेषु। अग्निर्हव्यर्ठ० शमिता सूदयाति॥ २१॥ अग्ने स्वाहा कृणुहि जातवेद इन्द्राय हव्यम्। विश्वेदेवा हविरिदं जुषन्ताम्॥ २२॥ पीवोअन्ना रयिवृधः सुमेधाः श्वेतः सिषक्ति नियुतामभिश्रीः। ते वायवे समनसो वितस्थुर्विश्वेन्नरः स्वपत्यानि चक्रुः॥ २३॥ राये नु यं जज्ञतू रोदसीमे राये देवी धिषणा धाति देवम्। अध वायुं नियुतः सश्चतः स्वा उत श्वेतं वसुधिती निरेके॥ २४॥ आपो ह यद्बृहतीर्विश्वमायन्गार्भं दधाना जनयन्तीरग्निम्। ततो देवानार्ठ० समवर्ततासुरेकः कस्मै देवाय हविषा विधेम॥ २५॥ यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्तीर्यज्ञम्। यो देवेष्वधि देव एक आसीत्कस्मै देवाय हविषा विधेम॥ २६॥ प्र याभिर्यासि दाश्वार्ठ०समच्छा नियुद्भिर्वायविष्टये दुरोणे। नि रौ रयिर्ठ० सुभोजसं युवस्व नि वीरं गव्यमश्व्यं च राधः॥ २७॥ आ नो नियुद्भिः शतिनीभिरध्वरर्ठ० सहस्रिणीभिरुपयाहि यज्ञम्। वायो अस्मिन्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः॥ २८॥ नियुत्वान्वायवागह्ययर्ठ० शुक्रोअयामि ते। गन्तासि सुन्वतो गृहम्॥ २९॥ वायो शुक्रो अयामि ते मध्वो अग्रं दिविष्टिषु। आयाहि सोमपीतये स्पार्हो देव नियुत्वता॥ ३०॥ वायुरग्रेगा यज्ञप्रीः साकं गन्मनसा यज्ञम्। शिवो नियुद्भिः शिवाभिः॥ ३१॥ वायो ये ते सहस्रिणो रथासस्तेभिरागहि। नियुत्वान्सोमपीतये॥ ३२॥ एकया च दशभिश्च स्वभूते दाभ्यामिष्टये विर्ठ०शती च। तिसृभिश्च वहसे

त्रिर्ठ०शता च नियुद्भिर्वायविह ता विमुञ्च॥ ३३॥ तव वायवृतस्पते त्वष्टुर्जामातरद्भुत। अवार्ठ० स्यावृणीमहे॥ ३४॥ अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः। ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः॥ ३५॥ न त्वावाँ२।। अन्यो दिव्ये न न पार्थिवो न जातो न जनिष्यते। अश्वायनतो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे॥ ३६॥ त्वमिद्धि हवामहे सातौ वाजस्य कारवः। त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्ववर्वतः॥ ३७॥ स त्वं नश्चित्र वज्रहस्त धृष्णुया महः स्तवानो अद्रिवः। गामश्वर्ठ० रथ्यमिन्द्र संकिर सत्रा वाजं न जिग्युषे॥ ३८॥ कया नश्चित्र आभुवदूती सदावृधः सखा। कया शचिष्ठयाऽवृता॥ ३९॥ कस्त्वा सत्यो मदानां मर्ठ०हिष्ठो मत्सदन्धसः। दृढा चिदारुजे वसु॥ ४०॥ अभी षु णः सखीनामविता जरितॄणाम्। शतं भवास्यूतये॥ ४१॥ यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे। प्र प्र वयममृतं जातवेदसं प्रियं मित्रं न शर्ठ०सिषम्॥ ४२॥ पाहि नो अग्न एकया पाह्युत द्वितीयया। पाहि गीर्भिस्तिसृभिरूर्जां पते पाहि चतसृभिर्वसो॥ ४३॥ ऊर्जो नपातर्ठ० स हिनाऽयमस्मयुर्दाशेम हव्यदातये। भुवद्वजेष्ववित भुवद्‌वृध उत त्राता तनूनाम्॥ ४४॥ संवत्सरोऽसि परिवत्सरोऽसीदात्सरोऽसीद्वसरोऽसि वत्सरोऽसि। उषसस्ते कल्पन्तामहोरात्रास्ते कल्पन्तामर्धमासास्ते कल्पन्तां मासास्ते कल्पन्ता-मृतवस्ते कल्पन्तार्ठ० संवत्सरस्ते कल्पतात्। प्रेत्या एत्यै संचाञ्च प्र च सारय। सुपुर्णचिदसि तया देवतयाङ्गिरस्वद्ध्रुवः सीद॥ ४५॥

ततोऽग्निं कांस्यपात्रे धृत्वा कांस्यपात्रेणाच्छाद्य कुण्डाद्बहिराग्नेय्यां संस्थाप्य आचार्यस्तमग्निं गृहीत्वा आग्नेयकोणमार्गेण कुण्डमध्ये नीत्वा। ॐ अग्निं दूतं पुरोदधे हव्यवाहमुप ब्रुवे॥ देवाँ२॥ आसादयादिह। इति मन्त्रान्ते शतमङ्गलनामानमग्निमुपसमादधे इत्यग्निं स्वाभिमुखं निधाय। तत आचार्यः—ॐ चत्वारि शृङ्गा त्रयोऽअस्य पादाद्वेशीर्षे सप्तहस्ता-सोऽअस्य। त्रिधा बद्धो वृषभोरोरवीतिमहोदेवो मर्त्यांऽआविवेश॥ इति

मन्त्रेण अग्निमावाह्य। ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञठं० समिमं दधातु। विश्वेदेवास इह मादयन्तामों ३ँप्रतिष्ठ॥ इति मन्त्रेण प्रतिष्ठाप्य ध्यायेत्—

रक्त माल्याम्बरधरं रक्त पद्मासनस्थितम्।
स्वाहा स्वधा वषट्कारै रङ्कितं मेष वाहनम्॥
शतं मंगलकं रौद्रं वह्निमावाहयाम्यहम्।
त्वं मुखं सर्व देवानां सप्तार्चिर मितद्युते।
आगच्छ भगवन्नग्ने वेद्यामस्मिन् संनिधो भव॥

इति षोडशैरुपचारैरग्निं संपूजयेत्।

## केवलं नामाऽनुक्रमेण ग्रहादिस्थापनम्

संकल्पः—देशकालौ सङ्कीर्त्य, अमुकगोत्रोऽमुकशर्माहम् ( वर्माऽहम्, गुप्तोऽहम्, दासोऽहम् ) अस्मिन् धूमावतीहवनकर्मणि सूर्यादिनवग्रहाणा-मधिदेवता - प्रत्यधिदेवता - पञ्चलोकपाल - दशदिक्पालानां चावाहनं स्थापनं पूजनं च करिष्ये।

## नवग्रहस्थापनम्

ॐ भूर्भुवः स्वः कलिङ्गदेशोद्भव काश्यपगोत्र रक्तवर्ण भो सूर्य! इहागच्छ इह तिष्ठ ॐ सूर्याय नमः, सूर्यमावाहयामि स्थापयामि॥ १॥

ॐ भूर्भुवः स्वः यमुनातीरोद्भव आत्रेयगोत्र शुक्लवर्ण भो सोम! इहागच्छ इह तिष्ठ ॐ सोमाय नमः, सोममामावाहयामि स्थापयामि॥ २॥

ॐ भूर्भुवः स्वः अवन्तिकापुरोद्भव भरद्वाजगोत्र रक्तवर्ण भो भौम! इहागच्छ इह तिष्ठ ॐ भौमाय नमः, भौममावाहयामि स्थापयामि॥ ३॥

ॐ भूर्भुवः स्वः मगधदेशोद्भव आत्रेयगोत्र हरितवर्ण भो बुध! इहागच्छेह तिष्ठ ॐ बुधाय नमः, बुधमावाहयामि स्थापयामि॥ ४॥

ॐ भूर्भुवः स्वः सिन्धुदेशोद्भव आङ्गिरसगोत्र पीतवर्ण भो बृहस्पते! इहागच्छ इह तिष्ठ ॐ बृहस्पतये नमः, बृहस्पतिमावाहयामि स्थापयामि॥ ५॥

ॐ भूर्भुवः स्वः भोजकटदेशोद्भव भार्गवगोत्र शुक्लवर्ण भो शुक्र! इहागच्छ इह तिष्ठ ॐ शुक्राय नमः, शुक्रमावाहयामि स्थापयामि॥ ६॥

ॐ भूर्भुवः स्वः सौराष्ट्रदेशोद्भव काश्यपगोत्र कृष्णवर्ण भो शनैश्चर! इहागच्छ इह तिष्ठ ॐ शनैश्चराय नमः, शनिश्चरमावाहयामि स्थापयामि॥ ७॥

ॐ भूर्भुवः स्वः वैराठिनपुरोद्भव पैठीनसिगोत्र कृष्णवर्ण भो राहो! इहागच्छ इह तिष्ठ ॐ राहवे नमः, राहुमावाहयामि स्थापयामि॥ ८॥

ॐ भूर्भुवः स्वः अन्तर्वेदिसमुद्भव जैमिनिगोत्रे धूम्रवर्ण भो केतो! इहागच्छ इह तिष्ठ ॐ केतवे नमः, केतुमावाहयामि स्थापयामि॥ ९॥

## अधिदेवतास्थापनम्

ततो ग्रहदक्षिणपार्श्वेऽधिदेवतास्थापनं कुर्यात्—

ॐ भूर्भुवः स्वः ईश्वर इहागच्छ इह तिष्ठ ॐ ईश्वराय नमः, ईश्वरमावाहयामि स्थापयामि॥ १॥

ॐ भूर्भुवः स्वः उमेहागच्छ इह तिष्ठ ॐ उमायै नमः, उमामावाहयामि स्थापयामि॥ २॥

ॐ भूर्भुवः स्वः स्कन्देहागच्छ इह तिष्ठ ॐ स्कन्दाय नमः, स्कन्दमावाहयामि स्थापयामि॥ ३॥

ॐ भूर्भुवः स्वः विष्णो इहागच्छ इह तिष्ठ ॐ विष्णवे नमः, विष्णुमावाहयामि स्थापयामि॥ ४॥

ॐ भूर्भुवः स्वः ब्रह्मन् इहागच्छ इह तिष्ठ ॐ ब्रह्मणे नमः, ब्रह्माणमावाहयामि स्थापयामि॥ ५॥

ॐ भूर्भुवः स्वः इन्द्रेहागच्छ इह तिष्ठ ॐ इन्द्राय नमः, इन्द्रमावाहयामि स्थापयामि ॥ ६ ॥

ॐ भूर्भुवः स्वः यम इहागच्छ इह तिष्ठ ॐ यमाय नमः, यममावाहयामि स्थापयामि ॥ ७ ॥

ॐ भूर्भुवः स्वः कालेहागच्छ इह तिष्ठ ॐ कालाय नमः, कालमावाहयामि स्थापयामि ॥ ८ ॥

ॐ भूर्भुवः स्वः चित्रगुप्तेहागच्छ इह तिष्ठ ॐ चित्रगुप्ताय नमः चित्रगुप्त-मावाहयामि स्थापयामि ॥ ९ ॥

## प्रत्यधिदेवतास्थापनम्

ततो ग्रहवामपार्श्वेप्रत्यधिदेवतास्थापनं कुर्यात्—

ॐ भूर्भुवः स्वः अग्ने इहागच्छ इह तिष्ठ ॐ अग्नये नमः, अग्नि-मावाहयामि स्थापयामि ॥ १ ॥

ॐ भूर्भुवः स्वः अप इहाऽऽगच्छत इह तिष्ठत ॐ अद्भ्यो नमः, अपआवाहयामि स्थापयामि ॥ २ ॥

ॐ भूर्भुवः स्वः पृथ्वी इहागच्छ इह तिष्ठ ॐ पृथिव्यै नमः, पृथिवी-मावाहयामि स्थापयामि ॥ ३ ॥

ॐ भूर्भुवः स्वः विष्णो इहागच्छ इह तिष्ठ ॐ विष्णवे नमः, विष्णुमावाहयामि स्थापयामि ॥ ४ ॥

ॐ भूर्भुवः स्वः इन्द्रेहागच्छ इह तिष्ठ ॐ इन्द्राय नमः, इन्द्रमावाहयामि स्थापयामि ॥ ५ ॥

ॐ भूर्भुवः स्वः इन्द्राणि इहागच्छेह तिष्ठ ॐ इन्द्राण्यै नमः, इन्द्राणीमावाहयामि स्थापयामि ॥ ६ ॥

ॐ भूर्भुवः स्वः प्रजापते इहागच्छेह तिष्ठ ॐ प्रजापतये नमः, प्रजापतिमावाहयामि स्थापयामि ॥ ७ ॥

ॐ भूर्भुवः स्वः सर्पा इहागच्छ इह तिष्ठ ॐ सर्पेभ्यो नमः, सर्पानामावाहयामि स्थापयामि॥ ८॥

ॐ भूर्भुवः स्वः ब्रह्मन् इहागच्छेह तिष्ठ ॐ ब्रह्मणे नमः, ब्रह्माण-मावाहयामि स्थापयामि॥ ९॥

## पंचलोकपालादिस्थापनम्

ततो विनायकादिपञ्चलोकपालदेवता वास्तोष्पतिं क्षेत्रपालं चाऽऽवाहयेत्—

ॐ भूर्भुवः स्वः गणपते इहागच्छेह तिष्ठ ॐ गणपतये नमः, गणपति-मावाहयामि स्थापयामि॥ १॥

ॐ भूर्भुवः स्वः दुर्गे इहागच्छेह तिष्ठ ॐ दुर्गायै नमः, दुर्गामावाहयामि स्थापयामि॥ २॥

ॐ भूर्भुवः स्वः वायो इहागच्छेह तिष्ठ ॐ वायवे नमः, वायुमावाहयामि स्थापयामि॥ ३॥

ॐ भूर्भुवः स्वः आकाश इहागच्छेह तिष्ठ ॐ आकाशाय नमः, आकाशमावाहयामि स्थापयामि॥ ४॥

ॐ भूर्भुवः स्वः अश्विनौ इहागच्छतां इह तिष्ठतां ॐ अश्विभ्यां नमः, अश्विनौ आवाहयामि स्थापयामि॥ ५॥

ॐ भूर्भुवः स्वः वास्तोष्पते इहागच्छेह तिष्ठ ॐ वास्तोष्पतये नमः, वास्तोष्पतिमावाहयामि स्थापयामि॥ ६॥

ॐ भूर्भुवः स्वः क्षेत्राधिपतये इहागच्छेह तिष्ठ ॐ क्षेत्राधिपतये नमः, क्षेत्राधिपतिमावाहयामि स्थापयामि॥ ७॥

## दशदिक्पालस्थापनम्

ततो मण्डलाद् बहिःदशदिक्पालानामावाहनं कुर्यात्—

ॐ भूर्भुवः स्वः इन्द्र इहागच्छ इह तिष्ठ ॐ इन्द्राय नमः, इन्द्रमावाहयामि स्थापयामि॥ १॥

ॐ भूर्भुवः स्वः अग्ने इहागच्छेह तिष्ठ ॐ अग्नये नमः, अग्निमावाहयामि स्थापयामि॥ २॥

ॐ भूर्भुवः स्वः यम इहागच्छेह तिष्ठ ॐ यमाय नमः, यममावाहयामि स्थापयामि॥ ३॥

ॐ भूर्भुवः स्वः निर्ऋते इहागच्छेह तिष्ठ ॐ निर्ऋतये नमः, निर्ऋतिमावाहयामि स्थापयामि॥ ४॥

ॐ भूर्भुवः स्वः वरुण इहागच्छेह तिष्ठ ॐ वरुणाय नमः, वरुणमावाहयामि स्थापयामि॥ ५॥

ॐ भूर्भुवः स्वः वायो इहागच्छेह तिष्ठ ॐ वायवे नमः, वायुमावाहयामि स्थापयामि॥ ६॥

ॐ भूर्भुवः स्वः सोमेहागच्छेह तिष्ठ ॐ सोमाय नमः, सोममावाहयामि स्थापयामि॥ ७॥

ॐ भूर्भुवः स्वः इशानेहागच्छेह तिष्ठ ॐ ईशानाय नमः, ईशानमावाहयामि स्थापयामि॥ ८॥

पूर्वेशानयोर्मध्ये—ॐ भूर्भुवः स्वः ब्रह्मन् इहागच्छेह तिष्ठ ॐ ब्रह्मणे नमः, ब्रह्माणं आवाहयामि स्थापयामि॥ ९॥

निर्ऋति-पश्चिमयोर्मध्ये—ॐ भूर्भुवः स्वः अनन्तेहागच्छेह तिष्ठ ॐ अनन्ताय नमः, अनन्तमावाहयामि स्थापयामि॥ १०॥

आचार्य आगे दिए हुए मंत्र और पौराणिक श्लोक का उच्चारण करते हुए यजमान से अक्षत छोड़वाकर प्रतिष्ठा करावें।

ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञꣳ समिमं दधातु। विश्वेदेवास इह मादयन्तामोंऽप्रतिष्ठ॥

अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च।
अस्यै देवत्वमर्चायै मामहेति च कश्चन॥

ॐ सूर्याद्यनन्तदेवताः सुप्रतिष्ठिताः वरदाः भवन्तु। 'सूर्याद्यनन्त-देवताभ्यो नमः' इति षोडशोपचारैः सम्पूजयेत्।

आचार्य निम्न मंत्र और पौराणिक श्लोक का उच्चारण करते हुए यजमान से प्रार्थना करावें—

ॐ ग्रहा ऽऊर्जाहुतयो व्यन्तो विप्राय मतिम्। तेषां विशिप्रियाणां वोऽहमिषमूर्ज्जꣳ समग्रभमुपयामगृहीतोऽसीन्द्राय त्त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्त्वा जुष्टतमम्॥

ब्रह्मा मुरारिस्त्रिपुरान्तकारी भानुः शशी भूमिसुतो बुधश्च।
गुरुश्च शुक्रः शनि-राहु-केतवः सर्वे ग्रहाः शान्ति करा भवन्तु॥
अनया पूजया सूर्याद्यनन्तदेवताः प्रीयन्ताम्।

## असङ्ख्यात रुद्रकलश स्थापनं पूजनं च

तदनन्तर ग्रहमण्डल के ईशानकोण में पहले बताई गई कलशस्थापन-विधि के द्वारा असङ्ख्यात रुद्र के कलश की स्थापना करवाकर उसमें वरुण और असङ्ख्यात रुद्र का निम्न मंत्र द्वारा यजमान से पूजन करावें—

ॐ असङ्ख्याता सहस्राणि ये रुद्रा ऽअधि भूम्याम्। तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि॥ ॐ भूर्भुवः स्व असङ्ख्यातरुद्रेभ्यो नमः असङ्ख्यातरुद्रानामावाहयामि स्थापयामि। ॐ मनो जूतिर्जुषता-माज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञꣳ समिमं दधातु। विश्वेदेवास इह मादयन्तामों ऽप्रतिष्ठ॥ इति मन्त्रेण प्रतिष्ठाप्य 'ॐ असङ्ख्यातरुद्रेभ्यो नमः' इति लब्धोपचारेण सम्पूजयेत्।

## केवलं नामाऽनुक्रमेण योगिनीस्थापनम्

जिस स्थान में हवनकुण्ड का निर्माण किया गया हो, उस स्थान में आचार्य एक हाथ चौड़ी वेदी पर परिखायुक्त वेदी पर लालवस्त्र से वेदी को ढककर उस पर नौ-नौ रेखाएँ पूर्व से पश्चिम, उत्तर से दक्षिण की ओर देवें। पुनः चौसठ खानों में चतुष्टीपद योगिनी के बनेगे, जिनमें रंगीन अक्षत भर कर योगिनी का आवाहन होगा।

तदुपरान्त स्वस्तिवाचन के मन्त्रों की आवृति से मध्य में तीन कलश स्थापित कर महाकाली, महालक्ष्मी, महासरस्वती का आवाहन कर पूजन करें, योगिनी वेदी के समीप बैठकर आचार्य निम्न संकल्प यजमान से करावें—

**देशकालौ सङ्कीर्त्य, अमुक गोत्रः अमुकशर्माऽहं (वर्माऽहं, गुप्तोऽहं, दासोऽहं) अस्य धूमावतीहवनकर्मणः समृद्ध्ये महाकाली-महालक्ष्मी-महासरस्वतीसहितानां चतुःषष्टियोगिनीनां पूजनं करिष्ये।**

उपरोक्त संकल्प के पश्चात् महाकाली की प्रतिमा योगिनी की प्रतिमा में '**ॐ अश्मन्नूर्जम्०**' इस वाक्य के द्वारा अग्न्युत्तारण करके प्रतिमा को यथास्थान स्थापित कर आवाहनादि करें—

**ॐ अम्बेअम्बिकेऽम्बालिके नमानयति कश्चन। ससस्त्य-श्वकः सुभद्रिकां काम्पीलवासिनीम्॥ १॥ ॐ श्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुं म इषाण सर्वलोकं म इषाण॥ २॥ ॐ पावका नः सरस्वती वाजेभिर्वाजिनीवती। यज्ञं वष्टु धियावसुः॥ ३॥ इति मन्त्रावावर्तनीयौ।**

ॐ गजाननायै नमः गजाननामावाहयामि स्थापयामि॥ १॥
ॐ सिंहमुख्यै नमः सिंहमुखीमावाहयामि स्थापयामि॥ २॥
ॐ गृध्रास्यायै नमः गृध्रास्यामावाहयामि स्थापयामि॥ ३॥

ॐ काकतुण्डिकायै नमः काकतुण्डिकामावाहयामि स्थापयामि॥ ४ ॥
ॐ उष्ट्रग्रीवायै नमः उष्ट्रग्रीवामावाहयामि स्थापयामि॥ ५ ॥
ॐ हयग्रीवायै नमः हयग्रीवामावाहयामि स्थापयामि॥ ६ ॥
ॐ वाराह्यै नमः वाराहीमावाहयामि स्थापयामि॥ ७ ॥
ॐ शरभाननायै नमः शरभाननामावाहयामि स्थापयामि॥ ८ ॥
ॐ उलूकिकायै नमः उलूकिकामावाहयामि स्थापयामि॥ ९ ॥
ॐ शिवारावायै नमः शिवारावामावाहयामि स्थापयामि॥ १०॥
ॐ मयूरायै नमः मयूरामावाहयामि स्थापयामि॥ ११॥
ॐ विकटाननायै नमः विकटाननामावाहयामि स्थापयामि॥ १२॥
ॐ अष्टवक्त्रायै नमः अष्टवक्त्रामावाहयामि स्थापयामि॥ १३॥
ॐ कोटराक्ष्यै नमः कोटराक्षीमावाहयामि स्थापयामि॥ १४॥
ॐ कुब्जायै नमः कुब्जामावाहयामि स्थापयामि॥ १५॥
ॐ विकटलोचनायै नमः विकटलोचनामावाहयामि स्थापयामि॥ १६॥
ॐ शुष्कोदर्यै नमः शुष्कोदरीमावाहयामि स्थापयामि॥ १७॥
ॐ ललज्जिह्वायै नमः ललज्जिह्वामावाहयामि स्थापयामि॥ १८॥
ॐ श्वदंष्ट्रायै नमः श्वदंष्ट्रामावाहयामि स्थापयामि॥ १९॥
ॐ वानराननायै नमः वानराननामावाहयामि स्थापयामि॥ २०॥
ॐ ऋक्षाक्ष्यै नमः ऋक्षाक्षीमावाहयामि स्थापयामि॥ २१॥
ॐ केकराक्ष्यै नमः केकराक्षीमावाहयामि स्थापयामि॥ २२॥
ॐ बृहत्तुण्डायै नमः बृहत्तुण्डामावाहयामि स्थापयामि॥ २३॥
ॐ सुरप्रियायै नमः सुरप्रियामावाहयामि स्थापयामि॥ २४॥
ॐ कपालहस्तायै नमः कपालहस्तामावाहयामि स्थापयामि॥ २५॥
ॐ रक्ताक्ष्यै नमः रक्ताक्षीमावाहयामि स्थापयामि॥ २६॥
ॐ शुष्क्यै नमः शुष्कीमावाहयामि स्थापयामि॥ २७॥

ॐ श्येन्यै नमः शेनीमावाहयामि स्थापयामि ॥ २८ ॥
ॐ कपोतिकायै नमः कपोतिकामावाहयामि स्थापयामि ॥ २९ ॥
ॐ पाशहस्तायै नमः पाशहस्तामावाहयामि स्थापयामि ॥ ३० ॥
ॐ दण्डहस्तायै नमः दण्डहस्तमावाहयामि स्थापयामि ॥ ३१ ॥
ॐ प्रचण्डायै नमः प्रचण्डामावाहयामि स्थापयामि ॥ ३२ ॥
ॐ चण्डविक्रमायै नमः चण्डविक्रमावाहयामि स्थापयामि ॥ ३३ ॥
ॐ शिशुघ्न्यै नमः शिशुघ्नीमावाहयामि स्थापयामि ॥ ३४ ॥
ॐ पापहन्त्र्यै नमः पाहन्त्रीमावाहयामि स्थापयामि ॥ ३५ ॥
ॐ काल्यै नमः कालीमावाहयामि स्थापयामि ॥ ३६ ॥
ॐ रुधिरपायिन्यै नमः रुधिरपायिनीमावाहयामि स्थापयामि ॥ ३७ ॥
ॐ वसाधयायै नमः वसाधयामावाहयामि स्थापयामि ॥ ३८ ॥
ॐ गर्भभक्षायै नमः गर्भक्षामावाहयामि स्थापयामि ॥ ३९ ॥
ॐ शवहस्तायै नमः शवहस्तामावाहयामि स्थापयामि ॥ ४० ॥
ॐ आन्त्रमालिन्यै नमः आन्त्रमालिनीमावाहयामि स्थापयामि ॥ ४१ ॥
ॐ स्थूलकेश्यै नमः स्थूलकेशीमावाहयामि स्थापयामि ॥ ४२ ॥
ॐ बृहत् कुक्ष्यै नमः बृहत्कुक्षीमावाहयामि स्थापयामि ॥ ४३ ॥
ॐ सर्पास्यायै नमः सर्पास्यामावाहयामि स्थापयामि ॥ ४४ ॥
ॐ प्रेतवाहिन्यै नमः प्रेतवाहिनीमावाहयामि स्थापयामि ॥ ४५ ॥
ॐ दन्तशूककरायै नमः दन्तशूककरामावाहयामि स्थापयामि ॥ ४६ ॥
ॐ क्रौञ्च्यै नमः क्रौञ्चीमावाहयामि स्थापयामि ॥ ४७ ॥
ॐ मृगशीर्षायै नमः मृगशीर्षामावाहयामि स्थापयामि ॥ ४८ ॥
ॐ वृषवाहिन्यै नमः वृषवाहिनामावाहयामि स्थापयामि ॥ ४९ ॥
ॐ व्यात्तास्यायै नमः व्यात्तास्यामावाहयामि स्थापयामि ॥ ५० ॥
ॐ धूमविश्वासायै नमः धूमविश्वासामावाहयामि स्थापयामि ॥ ५१ ॥

ॐ व्योमैकचरणोर्ध्वदृशे नमः व्योमैकचरणोर्ध्वदृशमा० स्था० ॥ ५२ ॥
ॐ तापिन्यै नमः तापिनीमावाहयामि स्थापयामि ॥ ५३ ॥
ॐ शोषणीदृष्ट्यै नमः शोषणीदृष्टिमावाहयामि स्थापयामि ॥ ५४ ॥
ॐ कोटर्यै नमः कोटरीमावाहयामि स्थापयामि ॥ ५५ ॥
ॐ स्थूलनासिकायै नमः स्थूलनासिकामावाहयामि स्थापयामि ॥ ५६ ॥
ॐ विद्युत्प्रभायै नमः विद्युतप्रभामावाहयामि स्थापयामि ॥ ५७ ॥
ॐ बलाकास्यायै नमः बलाकास्यामावाहयामि स्थापयामि ॥ ५८ ॥
ॐ मार्जार्यै नमः मार्जारीमावाहयामि स्थापयामि ॥ ५९ ॥
ॐ कटपूतनायै नमः कटपूतनामावाहयामि स्थापयामि ॥ ६० ॥
ॐ अट्टाट्टहासायै नमः अट्टाट्टहासामावाहयामि स्थापयामि ॥ ६१ ॥
ॐ कामाक्ष्यै नमः कामाक्षीमावाहयामि स्थापयामि ॥ ६२ ॥
ॐ मृगाक्ष्यै नमः मृगाक्षीमावाहयामि स्थापयामि ॥ ६३ ॥
ॐ मृगलोचनायै नमः मृगलोचनामावाहयामि स्थापयामि ॥ ६४ ॥

ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञर्ठ० समिमं दधातु। विश्वेदेवास इह मादयन्तामो ँ३। प्रतिष्ठ॥

तदुपरान्त आचार्य निम्न श्लोक और वाक्य द्वारा यजमान से प्रार्थना करावें—

ॐ सम्पूजिता मयादेव्यो योगिन्यः सगणाः शुभा।
मम यज्ञन्तु निर्विघ्नं कुर्वन्तु गणक्षेत्रपैः॥

ततः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः सवाहनाः दिव्यादिचतुः षष्टियोगिन्यः सुप्रतिष्ठिताः वरदा भवन्तु

## चतुर्वेदोक्तादिमन्त्रैर्योगिनीस्थापनम्

१- ऋग्वेद—तमीशानं जगतस्तस्थुषस्पतिं धियंजिन्वमवसे हूमहे वयम्। पूषा नो यथा वेदसामसद् वृधे रक्षिता पायुरदब्धः स्वस्तये॥ १॥ यजुर्वेद—तमीशानं जगतस्तस्थुषस्पतिं धियञ्जिन्वमवसे हूमहे वयम्। पूषा नो यथा वेदसामसद् वृधे रक्षिता पायुरदब्धः स्वस्तये॥ २॥ (सामवेद) आवो राजा॥ नमध्व। रस्यरुद्राम्। हो। ता। राम्। स। त्ययजाइम्। रोदसीयोः अग्निंपु। रा। तनयि। त्नोरचित्तात्। हिरण्य। रू॥ पा ३ मव। सा ३४३ इ॥ ३॥ अथर्ववेद—ईशां वो मरुतो देव आदित्यो ब्रह्मणस्पतिः। ईशां वा इन्द्रश्चाग्निश्च धाता मित्रः प्रजापतिः। ईशां व ऋषयश्चक्रुरमित्रेषु समीक्षयन् रदिते अर्बुदे तव॥ ४॥ एह्येहि यज्ञेऽत्र गजानने त्वं सिन्दूरवर्णे गणपेऽनुकूले। रक्ताम्बरे रक्तविलोचने च गृहाण पूजां वरदे नमस्ते॥ गजाननायै नमः गजाननामावाहयामि स्थापयामि॥ ५॥

२- ऋग्वेद—ब्रह्मा देवानां पदवीः कवीना मृपिर्विप्राणां महिषो मृगाणाम्। श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन्॥ १॥ यजुर्वेद—आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्यः शूरऽइषव्योऽतिव्याधी महारथो जायतान्दोग्ध्री धेनुर्वोढान- ड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतान्निकामे निकामेनः पर्जन्यो वर्षतु फलवत्यो न ऽओषधयः पच्यन्तां योगक्षेमो नः कल्पताम्॥ २॥ (सा०) ब्रह्मा। ब्रा २३ ह्या। जज्ञानं प्रथमं पुरस्तात्॥ विसाइ। वा २३ इसी। मतः सुरुचोवेन आवः। सबू। सा२३ बू। न्धिया उपमा अस्य वा इष्ठाः॥ सताः। सा २३ ताः। चयोनिमसतश्च वा इ वा ३४३। ओ २३४५ इ॥ डा॥ ३॥ स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन्॥ अथर्ववेदं—ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः। स बुध्न्याऽउपमा अस्य विष्ठाः सतश्च योनिमसतश्च वि वः ॥ ४॥ आवाहये सिंहमुखीं सुरूपां सर्वार्तिहन्त्रीं

सकलार्थदात्रीम्। विद्युन्निभां सर्वजगत्प्रणम्यां रक्षाध्वरं नो वरदे नमस्ते॥ सिंहमुख्ये नमः सिंहमुखीमावाहयामि स्थापयामि॥ ५॥

३- ऋग्वेद—महाँ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ इव। स्तोमैर्वत्सस्य वावृधे॥ १॥ यजुर्वेद—महाँ२॥ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ२॥ इव। स्तोमैर्वत्सस्य वावृधे। उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा॥ २॥ (सा.) इन्द्र हाउ। इा हो इ। पर्वता बृहता रथा २ इना २३ वा ३। ऊ ३४ पा॥ वामीर्हा उ। हा हो इ। इष आ वह तूँ सुवा २ इ रा २३ उवा ३। ऊ ३४ पर॥ वीत् ः हाउ। हा हो इ। हव्यानध्वरे सुदा २ इ वा २ उवा ३॥ ऊ ३४ पा० वर्द्धा हा उ। हा हा थांगीर्भिरिडयामदा २० ता २ उवा ३॥ ऊ ३२३४ पा॥ ३॥ (अ०) महाँ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ इव। स्तोमैर्वत्सस्य वावृधे॥ ४॥ एह्येहि गृध्रास्य इहामरेशि प्रचण्डदैतेय विमर्दने त्वम्। कुरु प्रसाद मयि देवि मातः पूजा त्वदर्था रचित्वा परैयन्॥ गृध्रास्यायै नमः गृध्रास्यामावाहयामि स्थापयामि॥ ५॥

४- ऋग्वेद—कद् रुद्राय प्रचेतसे मीह्लष्टमाय तव्यसे। वोचेम शंतमं हृदे॥ १॥ यजुर्वेद—सद्योजातो व्यमिमीत यज्ञमग्निर्देवा-नामभवत्पुरोगाः। अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहा कृतर्ठ० हविरदन्तु देवाः॥ २॥ (सा.) तद्वौहोवा॥ गाया २ सुताइसा २३४ चा। पुरुहूता। यसात्वा १ ना २ इ॥ शंयत्। हा। औ ३ होई। गा २२४ वा इ॥ ना २ शा २३४ औ हो वा॥ ए ३। किने २३४५॥ ३॥ (अ.) देवस्य सवितुः सवे कर्म कृण्वन्तु मानुषाः। शं नो भवन्त्वप ओषधीः शिवा॥ ४॥ आवाहये त्वामिह काकतुण्डै यज्ञ चतुर्वेद भवे सदैव। कोष्ठे तुरीये वसति विधत्स्व पूजां तवाहं विद्रधे विनम्रः॥ काक-तुण्डिकायै नमः काकतुण्डिकामावाहयामि स्थापयामि॥ ५॥

५- (ऋ०) वपुर्नु तच्चिकितुषे चिदस्तु समानं नाम धेनु पत्यमानम्। मर्तेष्वन्यद् दोहसे पीपाय सकृच्छुक्रं दुदुहे पृश्निरूधः॥ १॥

(य० ) आदित्यं गर्भं पयसा समङ्ग्धि सहस्रस्य प्रतिमां विश्वरूपम्। परिवृङ्धि हरसा माभिमर्ठ०स्थाः शतायुषं कृणुहि चीयमानः ॥ २ ॥ ( सा० ) उदुत्यम्। ओहाइ। जा। तवे २ दा २३४ साम्। देवं वहा। हीकेता २३४ वाः। दा २३४ र्शे हाइ। वा इश्वायसू। र्याम्। औ २३ हो वा। हो ५ इ॥ डा॥ ३॥ ( अ० ) कालो अश्वो वहति सप्तरश्मिः सहस्राक्षो अजरो भूरिरेताः। तमा रोहन्ति कवयो विपश्चितस्तस्य चक्रा भुवनानि विश्वा॥ ४॥ एह्येहि यज्ञेत्र सरोजहस्ते कल्याणदे रक्तमुखोष्ट्रग्रीवे। कलापदण्डास्त्रधरे प्रसीद विशाध्वरं नः सततं शुभाय॥ उष्ट्रग्रीवायै नमः उष्ट्रग्रीवामावाहयामि स्थापयामि॥ ५॥

६- ( ऋ० ) इतो वा सातिमीहमे दिवो वा पार्थिवादधि। इन्द्रं महो वा रजसः॥ १॥ ( य० ) स्वर्ण धर्मः स्वाहा स्वर्णार्कः स्वाहा स्वर्ण शुक्रः स्वाहा स्वर्ण ज्योतिः स्वाहा स्वर्ण सूर्यः स्वाहा॥ २॥ ( सा० ) अबोधिया॥ ग्नाइः समिधाजना २ नाम्। प्रताइधे ३ नूम्। इवायती मुषासम्। यह्वाई ३ वा। प्रवा २ यामुज्जिहानाः॥ प्रभाना २३ वा०। सस्रते नाकमच्छ। इडा २३ भा ३४३। ओ २३४५ इ। डा॥ ३॥ ( अ० ) कुहूं देवीं सुकृतं विद्मनापसमस्मिन् यज्ञे सुहवा जोहवीमि। सा नो रयिं विश्ववारं नि यच्छाद ददातु वीरं शतदायमुक्थ्यऽम्॥ ४॥ एह्येहि यज्ञेत्र सुवाजिग्रीवे विशालनेत्रे भव भूतिकर्त्री। देवान्समावाहय हव्यकामान् गृहाण पूजां सततं नमस्ते। हयग्रीवायै नमः हयग्रीवामावाहयामि स्थापयामि॥ ५॥

७- ( ऋ० ) श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः। श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि॥ १॥ ( य. ) सत्यं च मे श्रद्धा च मे जगच्च मे धनं च मे विश्वं च मे महश्च मे क्रीडा च मे मोदश्च मे जातं च मे जनिष्यमाणं च मे सूक्तं च मे सुकृतं च मे यज्ञेन कल्पन्ताम्॥ २॥ ( सा. ) तु चेतुना। यता ३२ त्सु २३४ नाः द्राधीया र ३४ यूः जीवासा २ इ। आदी २ त्यासाः २॥ समहसा २ः। कृणो ३ ता ५॥ ना २३४५॥ ३॥ ( अ. )

वाताज्जातो अन्तरिक्षाद्विद्युतो ज्योतिषस्परि स। नो हिरण्यजाः शंखः कृशनः पात्वं हसः॥ ४॥ एह्येहि वाराहि विशालरूपे द्रंष्ट्राग्रलीलोद्धृतभूमि के च। पीताम्बरे देवि नमोऽस्तु तुभ्यं गृहाण पूजां वरदे नमस्ते॥ वाराह्यै नमः वाराहीमावाहयामि स्थापयामि॥ ५ ॥

८- (ऋ०) गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी। अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन्॥ १॥ (य०) भायै दार्वाहारं प्रभाया अग्न्येधं ब्रध्नस्य विष्टपायाभिषेक्तारं वर्षिष्ठाय नाकाय परिवेष्टारं देवलोकाय पेशितारं मनुष्यलोकाय प्रकरितारर्ठ० सर्वेभ्यो लोकेभ्य उपसेक्तारमवऋत्यै वधायौपमन्थितारं मेधाय वासः पल्पूलीं प्रकामाय रजयित्रीम्॥ २॥ (सा०) आतू औ हो। आतू औ हो॥ न इन्द्र वृत्रा २३४ हान्। अस्माकमर्द्धम्। आगा २३ ही। गाही॥ ३॥ माहा २० माही २३॥ भिरू २३४ वा। ता ५ इभो ६ हाइ॥ ४॥ (अ०) अहमेव स्वयमिदं वदामि जुष्टं देवानामुत मानुषाणाम्। यं कामये तंतमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्। आवाहये हं शरभाननां त्वां समस्तसंसारविधानदक्षाम्। देवाधिदेवेशि परेशि नित्यं गृहाण पूजां वरदे नमस्ते॥ शरभाननायै नमः शरभाननामावाहयामि स्थापयामि॥ ५॥

९- (ऋ०) उपैतु मां देवसखः कीर्तिश्च मणिना सह। प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे॥ १॥ (य०) जिह्वा मे भद्रं वाङ्महो मनो मन्युः स्वराड् भामः। मोदाः प्रमोदा अङ्गुलीरङ्गानि मित्रं मे सहः॥ २॥ (सा०) हा। वो ३ हा। वो ३ हा ३। हा। ओ २३४ वा। हा इ। पूनाना २३४ सो। माधारापा २३४॥ आपो वा २३४ सा। नो अर्षा २३४ सी॥ आरत्ला २३४ धाः। योनीमा २३४ र्त्ता। स्यासीदा २३४ सी॥ ऊत्सोदा २३४ इवो। हा इरण्या २३४ याः। हा। हा। वो ३ हा ३। ओ २३४ वा। हा ३४। ओ हो वा॥ ए ३॥ अतिविश्वानिदुरितातरमा २३४५॥ ३॥ (अ०) अङ्गेभ्यस्त उदराय जिह्वाया आस्याऽयते। दद्भ्यो

गन्धाय ते नमः ॥ ४॥ उलूकिके त्वामिह भावयेहं काश्मीरपाटीर-विलेपनाढ्याम्। नानाविधालङ्करणोपपन्नां यज्ञे समागन्तुमशेषवन्द्याम्॥ उलूकिकायै नमः उलूकिकामावाहयामि स्थापयामि॥ ५॥

१०- (ऋ०) अभि प्रवन्त समनेव योषाः कल्याण्य १: स्मयमानासो अग्निम्। घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्यति जातवेदाः ॥ १ ॥ (य०) हिङ्काराय स्वाहा हिङ्कृताय स्वाहा क्रन्दते स्वाहाऽवक्रन्दाय स्वाहा प्रोथते स्वाहा प्रप्रोथाय स्वाहा गन्धाय स्वाहा घ्राताय स्वाहा निविष्टाय स्वाहोपविष्टाय स्वाहा सन्दिताय स्वाहा वल्गते स्वाहासीनाय स्वाहा शयानाय स्वाहा स्वपते स्वाहा जाग्रते स्वाहा कूजते स्वाहा प्रबुद्धाय स्वाहा विजृम्भमाणाय स्वाहा विचृत्ताय स्वाहा सꣳ हानाय स्वाहोपस्थिताय स्वाहायनाय स्वाहा प्रायणाय स्वाहा॥ २॥ (सा०) अश्वी अश्वी॥ रथीसु ३ रूपा १ ई २ त्। गोमाः यदि। द्राते १ साखा २। श्वात्रा २ भाजा २। वयसास चतेसा २३ दा॥ चन्द्राइर्या ३ ती ३॥ सा २३ भा ३ म्०। ३४३ पो ६ हाइ॥ ३॥ (अ०) यत् ते देवी निर्ऋत्तिराबबन्ध दाम ग्रीवास्वविमोक्यं यत्। तत् ते वि ष्याम्यायुषे वर्चसे बलायादोमदमन्नमद्धि प्रसूतः॥ ४॥ आवाहयेहं शिवपूर्विकां त्वां रावां महारावजितत्रिलोकीम्। कुरु प्रसादं मम धूमापूजा गृह्णीष्व पूजां करुणामये च॥ शिवारावायै नमः शिवारावामावाहयामि स्थापयामि॥ ५॥

११- (ऋ०) अद्या चिन्नू चित् तदपो नदीनां यदाभ्यो अरदो गातुमिन्द्र। नि पर्वता अद्मसदो न सेदुस्त्वया दृळ्हानि सुक्रतो रजांसि॥ १॥ (य०) अग्निश्च मे धर्मश्च मेऽर्कश्च मे सूर्यश्च मे प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मेऽदितिश्च मे दितिश्च मे द्यौश्च मेऽङ्गुलयः शक्वरयो दिशश्च मे यज्ञेन कल्पन्ताम्॥ २॥ (सा०) पिबासुत-स्यरसिनोमत्स्वाहा ३॥ ना २:। इन्द्रा २ गोमता २३:। हा उ। आपिर्नो २ बो। धिसाधमा २। दिये वृधा २३। हा उ॥ अस्माः अवाँ २३। हा॥ तु ते ३ हो २। या २३४ औ होवा॥ धियऊ २३४५॥ ३॥ (अ०) इन्द्रस्य

वृष्णो वरुणस्य राज्ञ अदित्यानां मरुतां शर्ध उग्रम्। महामनसां भुवनच्यवानां धोषो देवानां जयतामुदस्थात्॥ ४॥ मयूरिके त्वं विश मेऽध्वरेऽस्मिन् लोकत्रयेऽप्यप्रतिमप्रभावे। मयूरिरूपे त्रिदशैकवन्द्ये ममाध्वरं पाहि वरे नमस्ते॥ मयूरिकायै नमः मयूरिकामा० ॥ ५ ॥

१२- (ऋ०) यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे। प्रप्र वयममृतं जातवेदसं प्रियं मित्रं न शंसिषम्॥ १ ॥ (य०) पूषन् तव व्रते वयं न रिष्येम कदाचन। स्तोतारस्त इह स्मसि॥ २ ॥ (सा०) यज्ञायज्ञा। होइ। वो ३ ग्नय ए ३४ ॥ हिया ॥ गिरा गिरा। चा २ दक्षसाइ। प्रप्रावयाम्। अमृतं जा ३। त वे २ वा २३४ साम। प्रियम्मित्राम्। नशाः सिषाम्। एहिया। औ हो २३४५ इ॥ डा ॥ ३ ॥ (अ०) विश्वजित् कल्याण्यैऽ मा परि देहि। कल्याणि द्विपाच्च सर्वं नो रक्ष चतुष्पाद् यच्च नः स्वम्॥ ४॥ आवाहयेहं कमलासनस्थां विशालनेत्रां विकटाननां त्वाम्। सर्वज्ञकल्पां बहुमानयुक्तामागत्य रक्षां कुरु सुप्रसन्ने॥ विकटाननायै नमः विकटानानामावाहयामि स्थापयामि॥ ५ ॥

१३- (ऋ०) ईले द्यावापृथिवी पूर्वचित्तये ऽग्निं धर्म सुरुचं यामन्निष्टये। याभिर्भरे कारमंशाय जिन्वथस्ताभिरू षु ऊतिभिरश्विना गतम्॥ १ ॥ (य०) वेद्या वेदिः समाप्यते बर्हिषा बर्हिरिन्द्रियम्। यूपेन यूप आप्यते प्रणीतो अग्निरग्निना॥ २॥ (सा०) भूमिः। (त्रिः)। अन्तरिक्षम् (त्रिः) द्यौः। (द्विः) द्य। ३४। ओहो वा॥ ए ३। भूताया २३४५ ॥ ३ ॥ (अ०) प्रोष्ठेशयास्तल्पेशया नारीर्या वह्यशीवरीः। स्त्रियो याः पुण्यगन्धयस्ताः सर्वाः स्वापयामसि॥ ४॥ आवाहये त्वामहमष्ट-वक्त्रां कल्याणदात्रीं शुभकारिणीं मे। प्रसादये त्वां बहुचाटुकारैर्गृहाण पूजां वरदे नमस्ते॥ अष्टवक्त्रायै नमः अष्टवक्त्रामावाहयामि स्थापयामि॥ ५॥

१४- (ऋ०) अग्निं दूतं पुरो दधे हव्यवाहमुप ब्रुवे। देवाँ आ सादयादिह॥ १ ॥ (य०) अयमग्निः सहस्त्रिणो वाजस्य शतिनस्पतिः। मूर्धा कवी रयीणाम्॥ २॥ (सा०) अग्निः होतारं मन्ये। दा २३४। स्वन्तं

वसोः सू नुम्॥ सहसोजा ३ तावे १ दासा २ म्। विप्रन्नजा ३ तावे १ दासा २ म्। य ऊर्ध्वया ३ सूवध्वारा २ः देवो देवा ३ चाया १ कृपा २। घृतास्यविभ्राष्टिमनुशु। क्राशो १ चिपारः। आजूह्वा ३ ना ३॥ स्या २३ सा ३। पा ३४५ इषो ६ हाइ॥ ३॥ (अ०) सोमेन पूर्णं कलशं बिभर्षि त्वष्टास्य रूपाणं जनिता पशूनाम्। शिवास्ते सन्तु प्रजन्वऽ इह या इमा न्य १ स्मभ्यं स्वधिते यच्छ या अमूः॥ ४॥ आवाहये सुन्दरि कोटराक्षि त्वामत्र यज्ञे भव तापहारिणि। राजप्रजावंशकरी प्रसन्नां ममाध्वरं पाहि वरे नमस्ते॥ कोटराक्ष्यै नमः कोटराक्षीमावाहयामि स्थापयामि॥ ५॥

१५-(ऋ०) उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय। यथा वयमादित्य व्रते तवानागसो अदितये स्याम॥ १॥ (य०) इमं मे वरुण श्रुधी हवमद्या च मृडय। त्वामवस्युराचके॥ २॥ (सा०) यदाकदा च माहा ३॥ ढूषा २ इस्तोता २। जराइ। तमर्तियः। आदिद्वन्दा। औहो ३ हा ३। हा ३ इ। तावा २ रू २३४ णाम्। विपागिरा॥ धर्त्तारंव्या। औहो ३ हा ३। हाइ॥ व्रातानाम्। इडा २३ भा ३४३ ओ २३४५ इ॥ डा॥ ३॥ (अ०) अम्बयो यन्त्यध्वभिर्जामयो अध्वरीयताम्। पृञ्चतीमधुना पयः॥ ४॥ एह्येहि कुब्जे दुरितौघ नाशिनि सदानुकूले कलहंसजामिनि। मां पाहि दीनं शरणागतं च गृहाण पूजां वरदे नमस्ते॥ कुब्जायै नमः कुब्जामावाहयामि स्थापयामि॥ ५॥

१६-(ऋ०) यस्मिन् वृक्षे सुपलाशे देवैः सं पिबते यमः। अत्रा नो विश्पतिः पिता पुराणाँ अनु वेनति॥ १॥ (य०) यमाय त्वा मखाय त्वा सूर्यस्य त्वा तपसे। देवस्त्वा सविता मध्वानक्तु पृथिव्याः सꣳ स्पृशस्पाहि। अर्चिरसि शोचिरसि तपोऽसि॥ २॥ (सा०) आ २ याम्। अयायम्। औ ३ हो ३ इ। आ २ इ। ऊ २। ना के सुपार्णमुपयात्पतन्ताम्। पतन्तम्। औ ३ हो ३ इ। ऊ २। हृदावेनांतो अभ्यचाक्षतत्वा। क्षतत्वो ३। हो ३ इ। आ २ इ। ऊ २। आ २ याम्। अयायम्। औ ३ हो ३ इ। आ २ इ। ऊ २। हिरण्यायाक्षं वरुणास्यदूतम्। स्यदूतम्। औ ३ हो ३ इ। आ २

इ। ऊ २। यमस्य योनौ शकुनां भुरण्यम्। भुरण्यम् औ ३ हो ३ ई। आ २ इ। ऊ २। आ २ याम्। अयायम्। औ ३ हो ३ इ। आ २ इ। ऊ२। वाहा ३१३ वा २३॥ ए ३। दिवम्। ए ३। दिवा २३४५ म॥ ३॥ (अ०) हिङ्कृण्वतौ वसुपत्नी वसूनां वत्समिच्छन्ती मनसाभ्यागात्। गौरमी-मेदभि वत्सं मिषन्तं मूर्धान हिङ्कृणोन्मातवाउ॥ ४॥ एह्येहि दुर्गे विकटाक्षिनाम्नि प्रभावयास्मानिह यज्ञकामान्। संसारदुःखौघविनाशिके च रक्षाध्वरं नो वरदे नमस्ते॥ विकटाक्ष्यै नमः विकटाक्षीमावाहयामि स्थापयामि॥ ५॥

१७- (ऋ०) गन्धर्व इत्था पदमस्य रक्षति पाति देवानां जनिमान्यद्भुतः। गृभ्णाति रिपुं निधया निधापतिः सुकृत्तमा मधुनो भक्षमाशत॥ १॥ (य०) यमेन दत्तं त्रित एनमायुनगिन्द्र एणं प्रथमो अध्यतिष्ठत्। गन्धर्वो अस्य रशनामगृभ्णात्सूरादश्वं वसवो निरतष्ट॥ २॥ (सा०) गायन्तित्वा गायत्रिण आ॥ अर्चन्त्यर्कमर्का २३ इणाः। ब्रह्माणस्त्वा २ हो १ इ। शतक्रा २३ ता ३। उद्वंऽ शमिवया १ इमी ३ रे॥ उद्वंऽ शा २३४ मी॥ वाया ३२ उवा ४। उप्। मा २ इरो ३५ हा इ॥ ३॥ (अ०) स्त्रियः सतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वान् न वि चेतदन्धः। कविर्यः पुत्रः स ईमा चिकेत यस्ता विजानात्स पितुष्पितासत्॥ ४॥ एह्येहि शुष्कोदरि सुन्दरि त्वं समस्तदैतेयनिषूदयित्रि। आगत्य नः पालय दुःखितांश्च गृहाण पूजां वरदे नमस्ते॥ शुष्कोदर्यै नमः शुष्कोदरी-मावाहयामि स्थापयामि॥ ५॥

१८- (ऋ०) मित्रो जनान् यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम्। मित्रः कृष्टीरनिमिषाभि चष्टे मित्राय हव्यं घृतवज्जुहोत॥ १॥ (य०) मित्रस्य चर्षणीधृतोऽवो देवस्य सानसि। द्युम्नं चित्रश्रवस्तमम्॥ २॥ (सा०) आनोमित्रा। वरुणा ३। औ होवा ३२४॥ घृतैर्गव्यूतिमु। क्षता ३ म्। ओ होवा २॥ माध्वारजा २ऽ। सिसू ३। औ होवा २॥ क्रतु। इडा २३ भा ३४३। ओ २३४५ इ॥ डा॥ ३॥ (अ०)

मित्रावरुणयोर्भाग स्थ। अपां शुक्रमापो देवीर्वर्चो अस्मासु धत्त। प्रजापतेर्वो धाम्नास्मै लोकाय सादये॥ ४॥ आवाहयेऽहं ललदाद्याजिह्वानाम्नीं सुदेवीं चपलां सुनेत्राम्। नानाविधास्वादनतत्परां च गृहाण पूजां वरदे नमस्ते॥ ललज्जिह्वायै नमः ललज्जिह्वामावाहयामि स्थापयामि॥ ५॥

१९- (ऋ०) दिवस्पृथिव्योरव आ वृणीमहे मातृन् त्सिन्धून् पर्वताञ्छर्यणावतः॥ १॥ (य०) अग्ने ब्रह्म गृभ्णीष्व धरुणमस्यन्तरिक्षं दृठं० ह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय। धर्त्रमसि दिवं दृठं० ह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय। विश्वाभ्यस्त्वाशाभ्य उपदधामि चित्तःस्थोर्ध्वचितो भृगूणामङ्गिरसां तपसा तप्यध्वम्॥ २॥ (सा०) अग्निन्दूताम्। वृणीमहाइ। होतारा २३० वी। श्वद्वेदसाम्। अस्य या २३ ज्ञा। आ। औ ३ होवा। स्यासुक्रतुम्। इडा २३ भा ३४३। ओ २३४५ इ॥ डा ॥ ३ ॥ (अ०) आगन् रात्री संगमनी वसूनामूर्जं पुष्टं वस्वावेशयन्ती। अमावास्याऽ यै हविषा विधेमोजं दुहाना पयसा न आगन् ॥ ४ ॥ आवाहयेऽहं भवतीं श्वदंष्ट्रानाम्नी शुनो मूर्तिधरां महोग्राम्। अत्युग्ररूपां महदाननां च विशाधरं नो वरदे नमस्ते॥ श्वदंष्ट्रयै नमः श्वदंष्ट्रामावाहयामि स्थापयामि॥ ५ ॥

२०- (ऋ०) भवा मित्रो न शेव्यो घृतासुतिर्विभूतद्युम्न एवया उ सप्रथाः। अधा ते विष्णो विदुषा चिदर्ध्यः स्तोमो यज्ञश्च राध्यो हविष्मता ॥ १ ॥ (य०) भग प्रणेतर्भग सत्यराधो भगेमां धियमुदवा ददन्नः। भग प्र नो जनय गोभिरश्वैर्भग प्र नृभिर्नृवन्तः स्याम ॥ २ ॥ (सा०) अग्निरौहोवाहाई। वृत्राणि। जाङ्घा ३ नात्। औ हो ३ वा ३। द्रविणा २३४ स्युः। ओ इ वो इपन्यया २। समाये ३। धा २ः शू २३४ औ हो वा। क्रयाहुता २३४५ः॥ ३ ॥ (अ०) सिन्धुपत्नीः सिन्धुराज्ञीः सर्वा या नद्य १ स्थन। दत्त नस्तस्य भेषजं तेना वो भुनजामहै॥ ४ ॥ आवाहये त्वामिह वानराननां प्रियां हनूमद्विदुषो महामते। देवि त्वमस्मान्परिपाहि

नित्यं श्रीरामभक्ते सततं शिवाय॥ वानराननायै नमः वानरानना-मावाहयामि स्थापयामि॥ ५ ॥

२१- (ऋ०) रात्री व्यख्यदायती पुरुत्रा देव्य १ क्षभिः। विश्वा अधि श्रितोऽधित ॥ १ ॥ (य०) सुपर्णोऽसि गरुत्मान् पृष्ठे पृथिव्याः सीद। भासान्तरिक्षमापृण ज्योतिषा दिवमुत्तभान तेजसा दिश उद्दृठं० ह ॥ २ ॥ (सा०) नित्वामग्राइ॥ मनुर्हा २३४ थाइ। ज्योतिर्जना। या शश्वाता २ इ। दी। दाइ। थक ण्वाऋतजा ३। त ऊ रक्षा २३४ इता॥ यन्नमस्या २३॥ ता २ इ कृ २३४ औ होवा॥ ष्टा २३४ याः ॥ ३ ॥ (अ०) तद् भद्राः समगच्छन्त वशा देष्याथो स्वधा। अथर्वा यत्र दीक्षितो बर्हिष्ट्यस्त हिरण्यये ॥ ४ ॥ एह्येहि ऋक्षाक्षिभवानि नित्यं विनाश-यास्माकमघं समन्तात्। हीनप्रबोधं शरणागतं मां त्रायस्व कल्याणि परे नमस्ते॥ ऋक्षाक्ष्यै नमः ऋक्षाक्षीमावाहयामि स्थापयामि॥ ५॥

२२- (ऋ०) उदीरतामवर उत् परास उन्मध्यमाः पितरः सोम्यासः। असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥ १ ॥ (य०) पितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधायिभ्य स्वधा नमः। अक्षन्पितरोऽ-मीमदन्त पितरोऽतीतृपन्त पितरः पितरः शुन्धध्वम्॥ २॥ (सा०) यद्वाऊ २३ विश्पतिः शिताः॥ सुप्रीतोमनुषोविशे॥ विश्वा इदा ३२ ग्नीः॥ प्रतिरक्षा। सिसेधता। औ ३ होवा हो ५ इ॥ डा॥ ३॥ (अ०) पूर्णं नारि प्र भर कुंभमेतं घृतस्य धारा ममृतेन संभृताम्। इमां पातृनतेमृना समङ्ग्धीष्टापूर्तमभि रक्षात्येनाम्॥ ४॥ आवाहये त्वामिहकेकराक्षीं शुभाननां दिव्यगुणार्णवां चे। समुद्रजातां परमार्थदात्रीं त्रायस्व हे भार्गवनन्दनेऽस्मान्॥ केकराक्षयै नमः केकराक्षीमावाहयामि स्थापयामि॥ ५॥

२३- (ऋ०) क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम्। अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात्॥ १॥ (य०) या ते रुद्र शिवा

तनूरघोराऽपापकाशिनी। तया नस्तन्वा शन्तमया गिरिशन्ता भिचाकशीहि॥ २॥ ( सा० ) चन्द्रमाअप्सुवा॥ तरा। सुपर्णो धावते दा २३ इ वी। न वा २३ होइ। हिरण्यनेमयः परं विन्द। तिविद्यता २३ः। वित्तः होई। म आ २३ हो॥ स्यरो २३। दा २ सा २३४ औ होवा॥ ऊ ३२३४ पा॥ ३॥ ( अ० ) उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय। अधा वयमादित्य व्रते तवानागसो अदितये स्याम॥ ४॥ आवाहये त्वामिह देवपुत्रीं बृहन्मुखीं किन्नरगीयमानाम्। केयूर-माणिक्यविभूषिताङ्गी मनोरमां सर्वसुखाधिदात्रीम्॥ बृहत्तुण्डायै नमः बृहन्तुण्डामावाहयामि स्थापयामि॥ ५ ॥

२४- ( ऋ० ) तमिद् धनेषु हितेष्वधिवाकाय हवन्ते। येषामिन्द्रस्ते जयन्ति॥ १॥ ( य० ) वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः। करतां नः सुराधसः॥ २॥ ( सा० ) आवोराजा। नमध्व। रस्य रुद्राम्। हो। ता। राम्। स। त्य य जा ३ म्। रोदसीयोः। अग्निं पु। रा। तनयि। त्नोरचिन्तात्॥ हिरण्य। रू॥ पा ३ मव। सा ३४३ इ। का ३ र्णू ५ ध्वी ६५६ म्॥ ३॥ ( अ० ) वाताज्जातो अन्तरिक्षाद्विद्युतो ज्योतिषस्परि। स नो हिरण्यजाः शंखः कृशनः पात्वंहसः ॥ ४ ॥ एह्येहि यज्ञेऽसुरराज पुत्रि सुराप्रिये सर्वभयापहे त्वम्। सुरप्रिये योगिनि दिव्यदेहे नमामि मातस्तव पादपङ्कजम्॥ सुरप्रियायै नमः सुरप्रियामावाहयामि स्थापयामि॥ ५ ॥

२५- ( ऋ० ) स्तोत्रमिन्द्रो मरुद्गणस्त्वष्टृमान् मित्रो अर्यमा। इमा हव्या जुषन्त नः॥ १॥ ( य० ) हꣳस॰ सः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्॥ २॥ ( सा० ) हा उ हो वा। ( त्रिः )। परात्परमैरय। ता। ( द्वेत्रिः )। यज्जायथाः। अपूर्विया। अपूर्विया। आपूर्वा २३४ या॥ मघवन् वृ। त्रहत्याया त्रहत्यायाः ३ः त्राहत्या २३४ या। तन्पृथिवीम्। अमाथया ३ः। अप्राथयाः। अप्राथया ३ः। अप्राथा २३४ याः॥ तदस्तम्नाः। उतोदिवाम्। उतोदिवा ३ म्। अतोदा २३४ इवाम्। हा

उहोवा। ( त्रिः ) परात्परमैरय। ता। ( द्वेत्रिः )। परात्परमै रय। त। औ हो वाहा उ। वा॥ ए। तेजोधर्मः संक्रीडन्ते वायुगोपास्तेजस्वतीर्म-रुद्भिर्भुवनानि चक्रदुः॥ ३॥ ( अ० ) ग्रामणीरसि ग्रामणीरुत्थाया-भिषिक्तोऽभि मा सिञ्च वर्चसा। तेजोऽसि तेजो मयि धारयाधि रयिरसि रयिं मे धेहि॥ ४॥ एह्येहि मातस्सुकपालहस्ते जगल्लये शङ्करवल्लभे च। वृषाधिरूढे ललिते सुरेशे गृहाण पूजां वरदे नमस्ते। कपालहस्तायै नमः कपालहस्तामावाहयामि स्थापयामि॥ ५॥

२६- ( ऋ० ) जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः। स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः॥ १॥ ( य० ) सुसंदृशं त्वा वयं मघवन्वन्दिषीमहि। प्र नूनं पूर्णबन्धुरः स्तुतो यासि वशाँ अनु योजान्विन्द्र ते हरी॥ २॥ ( सा० ) अभाइमाहे। ( त्रिः ) चर्षणीधृतं मघवाना ३ मूक्था १ याऽ २ म्। इन्द्रंजिरो बृहतीरभ्या ३ नूषा १ ता २॥ वावृधानं पुरुहूतꣳ सु ३ वार्क्ता १ इभी २ः॥ अमर्त्यं जरमाणं दि ३ वो इदा १ इवे २। अभामाइहे। ( द्विः )। अभा २३ इ। मा २। हा २३४। औहोवा। सर्पसुवा २३४५ः॥ ३॥ ( अ० ) बृहद्द्रावासुरेभ्योऽधि देवानुपावर्तत महिमानमिच्छन्। तस्मै स्वप्नाय दधुराधिपत्यं त्रयस्त्रिंशासः स्वऽरान-शानाः॥ ४॥ एह्येहि रक्ताक्षि सुचारूपे क्रोधेन दूरीकृतदानवेन्द्रे। यज्ञे समागच्छ सुमध्यमे त्वं गृहाण पूजां वरदे नमस्ते॥ रक्ताक्ष्यै नमः रक्ताक्षीमावाहयामि स्थापयामि ॥ ५॥

२७- ( ऋ० ) परा शुभ्रा अयासो यव्या साधारण्येव मरुतो मिमिक्षुः। न रोदसी अप नुदन्त घोरा जुषन्त वृधं सख्याय देवाः॥ १॥ ( य० ) देवीरापो अपांनपाद्यो ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमः। तं देवेभ्यो देवत्रा दत्त शुक्रपेभ्यो येषां भाग स्थ स्वाहा ॥ २ ॥ ( सा० ) ए २। विदामघवन्विदाः॥ गातुमनुशꣳ सिषः। दाइशा ३१ उवा २३। ई ३४ डा॥ ए २। शिक्षाशचीनाम्पताइ॥ पूर्वीषाम्पूरू २। वसा ३१ उवा २३॥ ई ३४ डा। आभिष्ट्रमभा २ ह। ष्टिभिरा ३१ उवा २३। ई ३४ डा। स्वर्न्नाꣳ

शूरः। हाउ १ उवा २३ ई ३४ डा। प्रा। चेतनप्रचेतया॥ ईन्द्रा॥ द्युम्नायना २ इषाइ। इडा॥ ईन्द्रा॥ द्युम्नायना २ इषाइ। अथा ॥ ईन्द्रा॥ द्युम्नायना २ इषाइ। इडा एवाहिशक्रो राये वा जायना १ ज्री ३ वाः। शविष्ठवज्रिन्ना ३। जासाइ॥ मः हिष्ठवज्रिन्ना २३ हो॥ जासा ३१ उवा २३॥ इट् इडा २३४५॥ आया॥ हिपिबमा २ त्सुवा॥ इडा २३४५। ए २। विदाराये सुवीरियाम्। भुवो वाजानाम्पतिर्वशा २ः। अनुआ ३१ उवा २३। ई ३४ डा॥ ए २। मः हिष्ठवज्रिनृञ्जसाइ। यऽशविष्ठः शूरा २। णा ३१ उवा २३॥ ई ३४ डा॥ योमः हिष्ठा मघो २। ना ३१ उवा २३। ई ३४ डा॥ अः शुर्नशोचा २ इः। हा ३१ उवा २३। ई ३४ डा। चाइ। कत्वो अभिनीनया॥ ईन्द्रो॥ विदेतमू २ स्तु हाइ॥ इडा॥ ईन्द्रो॥ विदेतमू २ स्तुहा इ। आथा॥ ईन्द्रो। विदेतमू २ स्तुहाइ। इडा। ईशेहि शक्रस्तमूतये हवा १ मा ३ हाइ। जेतारमपरा ३। जाइताम्। सनः स्वर्षदता २३ होइ॥ द्वाइषा ३१ उवा २३॥ इट् इडा २३४५॥ क्रातूः छन्द ऋता २ म्बृहात् इडा २३४५॥ ए २ इन्द्रन्धनस्य सातयाइ॥ हवामहे जेतारमपरा २। जितमा ३१ उवा २३। ई ३४ डा॥ ए २। सनः स्वर्षदहिद्विषा॥ सानः स्वर्षदता २ इ। द्विष आ ३१ उवा २३। ई ३४ डा। पूर्वस्ययत्त आ २। द्विव आ ३१ उवा २३। ई ३४ डा। अः शु र्म दाया २। हाउ १ उवा २३। ई ३४ डा। सू। म्नआधेहिनो व सा उ॥ पर्त्तीः शविष्ठशा २ स्यताइ। इडा पूर्तीः। शविष्ठशा २ स्य ताइ। अथा॥ पूर्त्तीः॥ शविष्ठशा २ स्यताइ। इडा। वशीहिशक्रो नूनन्तन्नध्यः सा १ न्या २ साइ। प्रभोजनस्यवा ३॥ त्राहान्॥ समर्येषुब्रवा २३ हो इ॥ वाहा ३१ उवा २३॥ इटा इडा २३४५॥ शूरो॥ योगोषुगा २ च्छा ताइ। इडा॥ सारवा सुशेवो २ द्वयूः॥ इडा २३४५ ॥ ३ ॥ आइवा हियेवा २३४५। होइ। हो। वाहा ३१ उवा २३॥ ई ३४ डा॥ आइवा॥ हिइन्द्रा २३४५ इ। होइ। हो। वाहा ३१ उवा २३॥ ई ३४ डा॥ आइवा॥ हिपूषा २३४५ न्। होइ॥ हो। वाहा ३१ उवा २३॥ ई ३४ डा॥ आइवा॥ हि देवा २३४५ः। होइ॥ हो। हो। वाहा ३१ उवा २३॥ ई ३४ डा॥

( अ० ) शिवास्त एका अशिवास्त एकाः सर्वा बिभर्षि सुमनस्यमानः। तिस्रो वाचो निहिता अन्तरस्मिन्तासामेका वि पापातानु घोषम्॥ ४ ॥ एह्येहि मातश्शुकि योगिनि त्वमस्मत्सवे ब्रह्ममहेशवन्द्ये। परात्परेशे विहिताङ्गरागे गृहाण पूजां वरदे नमस्ते॥ शुष्क्यै नमः शुष्कीमावाहयामि स्थापयामि॥ ५ ॥

२८- ( ऋ० ) रक्षोहणं वाजिनमा जिघर्मि मित्रं प्रथिष्ठमुप यामि शर्म। शिशानो अग्निः क्रतुभिः समिद्धः स नो दिव स रिष पातु नक्तम् ॥ १ ॥ ( य० ) प्रतिपदसि प्रतिपदे त्वानुपदस्यनुपदे त्वा सम्पदे त्वा तेजोऽसि तेजसे त्वा ॥ २ ॥ ( सा० ) तक्षद्यदी। हो २३४५ इ॥ मनसोवेनतः। वा २३४५ क्॥ ज्येष्ठस्यधा ३१२३४। मन्द्युक्षीरनी॥ का २३४५ इ॥ आदाइमाया ३१२३४ न्। वरमावावशा। ना २३४५:॥ जुष्ठम्यता ३१२३४ इम्। कलशेगा ५ वः। इ। दाउ॥ वा ॥ ३ ॥ ( अ० ) रक्षोहणं वाजिनमा जिघर्मि मित्रं प्रतिष्ठमुप यामि शर्म। शिशानो अग्निः क्रतुभिः समिद्धः स नो दिवा स रिषः पातु नक्तम्॥ ४॥ हे श्येनि मातर्दह दुःखजातं यज्ञे समागत्य चतुर्भुजे नः। अनन्यभावाः करुणार्द्रचित्ताः कल्याण-काङ्क्षा भवतीं नमामः॥ श्येन्यै नमः शेनीमावाहयामि स्थापयामि॥ ५॥

२९- ( ऋ० ) समुद्रज्येष्ठाः सलिलस्य मध्यात् पुनाना यन्त्यनिविशमानाः। इन्द्रो या वज्री वृषभो रराद् ता आपो देवीरिह मामवन्तु ॥ १ ॥ ( य० ) द्वारो देवीरन्वस्य विश्वे व्रता ददन्ते अग्नेः। उरु व्यचसो धा पत्यमानाः॥ २॥ ( सा० ) हाउहा उहाउ। आयुश्चक्षुर्ज्योति। औ होवा। ईया। उदुत्तमं वरुणपाशमा ३३ स्मात्। अवाधमंविमध्यमः श्रथा २३ या॥ अथा नित्यव्रतेवयता २३॥ अनागसो अदियेसिया २३ मा ३। हाउहा उहाहा आयुश्चक्षुर्ज्योतिः। औ होवा ई २। या २३४। औहोवा॥ ई २३४५ ॥ ३॥ ( अ० ) आपो अग्रे विश्वमावन् गर्भं दधाना अमृता ऋतज्ञाः। यासु देवीष्वधि देव आसीत् कस्मै देवाय हविषा विधेम॥ ४॥ प्रसादमाधाय कपोतकाख्ये देवि त्वमागच्छ ममाध्वरेऽत्र।

समस्तदेवा सुरवन्दरवनीये गृहाण पूजां वरदे नमस्ते॥ कपोतिकायै नमः कपोतिकामावाहयामि स्थापयामि॥ ५॥

३०- ( ऋ० ) पिबापिबेदिन्द्र शूर सोमं मा रिषण्यो वसवान वसुः सन्। उत त्रायस्व गृणतो मघोनो महश्च रायो रेवतस्कृधी नः॥ १॥ ( य० ) देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। आददे नार्यसीदमर्ठ० रससां ग्रीवा अपि कृन्तामि। बृहन्नसि बृहद्रवा बृहतीमिन्द्राय वाचं वद॥ २॥ ( सा० ) एतमुस्यम्। ए ५। मदा॥ च्युताम्। सहस्रधारं वृषभं दिवोदू २३ हाम्॥ वा इश्चा २ वासू २३॥ निषो २३४ वा। श्रा ५ तो ६ हाइ॥ ३॥ ( अ० ) सत्यं बृहदृतमुग्रं दीक्षा तपो ब्रह्म यज्ञः पृथिवीं धारयन्ति। सा नो भूतस्य भव्यस्य पत्न्युरुं लोकं पृथिवी नः कृणोतु॥ ४॥ आवाहये माशकरां प्रकेतः प्रियां प्रतीच्यामुपलब्ध-वासाम्। जलाधिनाथां स्फटिकप्रभां त्वां गृहाण मेऽर्चां शिवमातनुष्व॥ पाशहस्तायै नमः पाशहस्तमावाहयामि स्थापयामि॥ ५॥

३१- ( ऋ० ) पृषदश्वा मरुतः पृश्निमातरः शुभंयावानो विदथेषु जग्मयः। अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसा गमन्निह ॥ १॥ ( य० ) भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः। दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम् ॥ २॥ ( सा० ) प्रत्यग्ने। हरसाहरा ६ ए। शृणाहि वा २ इ। श्वता ३४५ः। पा ३४ री॥ यातुधानस्य रक्षसो ३॥ वा २ लाम्। नियुब्जवो २३४ वा॥ री २३४ याम् ॥ ३॥ ( अ० ) य एवं विदुषेऽदावाथान्येभ्यो ददद् वशाम्। दुर्गा तस्मा अधिष्ठाने पृथिवी सह देवता॥ ४॥ आवाहये त्वामिह दण्डहस्तां यमेप्सितामञ्जनसन्निभां च। विशालवक्षःस्थलरुद्ररूपां गृहाण पूजां वरदे नमस्ते॥ दण्डहस्तायै नमः दण्डहस्तामावाहयामि स्थापयामि॥ ५ ॥

३२- ( ऋ० ) महे नो अद्य बोधयाषो राये दिवित्मती। यथा चिन्नो अबोधयः सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ १॥ ( य० ) कदाचन

स्तरीरसि नेन्द्र सश्चसि दाशुषे। उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यत आदित्येभ्यस्त्वा॥ २॥ (सा०) शचीभिर्ना ५: शची वसू॥ दिवानक्तं दिशस्यताम्। मावा २ म्। रातिरुपदसत्कदाचना। आस्मा २ त्। रातिः कदो २३४ वा। चा ५ नो ६ हाइ॥ ३॥ (अ०) शिवास्त एका अशिवास्त एकाः सर्वा बिभर्षि सुमनस्यमानः। तिस्रो वाचो निहिता अन्तरस्मिन् तासामेका वि पपातानु घोषम्॥ ४॥ एह्येहि देवि त्वमिह प्रचण्डे प्रचण्डनोर्दण्डसुरारिहस्ते। सुरासुरैरचितपादपद्मे विशाध्वरं नो वरदे नमस्ते॥ प्रचण्डायै नमः प्रचण्डामावाहयामि स्थापयामि॥ ५॥

३३- (ऋ०) मा नस्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः। वीरान् मा नो रुद्र भामितो वधीर्हविष्मन्तः सदमित् त्वा हवामहे ॥ १ ॥ (य०) भद्रं कर्णेभिः शृणयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवार्ठ० सस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ २ ॥ (सा०) हा ३ (३)। वाग्घहहहह। (त्रिः)। ऐहि २। (त्रिः) ऐहिहा ३ वाक्। (त्रिः)। हा हाउ। (त्रिः) हाउ (३) वा। प्रजातोकमजीजनेहस। इहा २३४५। हा उ (३)। वाऽघहहह। (त्रिः)। एही २। (त्रिः)। एहिहा उवाक्। (त्रिः)। हाहाउ। (त्रिः) आयाउ। (त्रिः)। अग्निरस्मिजन्मना औ ३ हो। हा २ इया। ॐ ३ हो। हा २ इया। ओ ३ हो ३॥ (हाउ ३)। वाग्धहहहह। (त्रिः)। ऐहिहाउवाक्। (त्रिः) हाहाउ। (त्रिः)। त्हाउ (३)। वाग्हहहह। (त्रिः) एहिहा उवाक्। (त्रिः) हाहाउ। (त्रिः) आयाउ। (त्रिः) जातवेदाओ ३ हो। हा २ हया। ओ ३ हो। हा २ हया। औ ३ हो ३। हाउ (३) वाग्घहहहह। (त्रिः) ऐही २। ऐहिहा उवाक्। (त्रिः)। हाहाउ। (त्रिः)। हाउ (३) वा। रायस्पोषायसुकृतायभूयसेहस। इहा २३४५। हाउ (३)। वाग्घहहहह। (त्रिः)। एही २। (त्रिः) ऐहिहा उवाक्। (त्रिः)। हाहाउ। (त्रिः)। आयाउ। (त्रिः)। घृतं मे चक्षुरमतं म आसानौ ३ हो। हा २ इया। औ ३ हो। हा २ इया। औ ३ हो। हाउ (३) वाग्धहहहह। (त्रिः)। ऐही २।

(त्रिः)। ऐहिहा उवाक्। (त्रिः)। हाहाउ। (त्रिः)। हाउ (३) वा। आगान्वाममिदं बृहद्धस्। इहा। २३४५। हाउ (३)। वाग्घहहहह। (त्रिः)। ऐही २। (त्रिः) ऐहिहाउवाक्। (त्रिः)। हाहाउ। (त्रिः)। आहाउ। (त्रिः)। त्रिधातुरर्कोरकसोविमाना औं ३ हो। २ इया। औं ३ हो। हा २ इया। ॐ ३ हो ३॥ हाउ (३)। वाग्घहहहह। (त्रिः) ऐही २। (त्रिः)। ऐहिहाउवाक्। (त्रिः)। हाहाउ। (त्रिः)। हाउ (३) वा। इदं वामहिद बृहद्धस्। इहा। २३४५। हाउ (३)। वाग्घहहहह। (त्रिः)। ऐही २। (त्रिः) ऐहिहाउवाक्। (त्रिः)। आया उ। (त्रिः) अजस्त्रं ज्योता इरौं ३ हो। हा। हा २ इया। ॐ ३ हो। हा २ इया। ॐ ३ हो ३॥ हाउ (३) वाग्घहहहह। (त्रिः) ऐही २। (त्रिः) ऐहिहाउवाक्। (त्रिः) हाहाउ। (त्रिः)। हाउ (३) वा चराचराय बृहत इदं वाममिदं बृहद्धस्। इहा २३४५। हाउ (३)। वाग्धहहहह। (त्रिः) ऐही ५। (त्रिः)। ऐहिहाउवाक् (त्रिः)। हाहाउ (त्रिः) आयाउ। (त्रिः) हविरस्मिसर्वामौं ३ हो। हा २ इया औं ३ हो। हा २ इया। ॐ ३ हो २। हाउ (३) वाग्घहहहह (त्रिः)। ऐहिहाउवाक्। (त्रिः)। हा हाउ। (त्रिः)। हाउ (३) वा॥ एयशोक्रान्भूतमततनत्प्रजा उसमचूकुपत्पशुभ्योहस्। इहा २३४५ ॥ ३॥ (अ०) मा नो महान्तमुत मा नो अर्भकं मा नो वहन्तमुत मा ना वक्ष्यतः। मा नोः हिंसीः पितरं मातरं च स्वां तन्वऽ रुद्र मा रीरिषो नः ॥ ४॥ आवाहये त्वामिह चण्डविक्रमामज्ञानतामिस्त्रनिराकरीं च। संसारपङ्केऽत्र निमज्जनानानुद्धारयन्तीं भवतीं नमामि॥ चण्डविक्रमायै नमः चण्डविक्रमावाहयामि स्थापयामि॥ ५॥

३४- (ऋ०) अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम्॥ १॥ (य०) इषे त्वोर्ज्जे त्वा वायव स्त्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्न्या इन्द्राय भागं प्रजावतीरनमीवा अयक्ष्मा मा वस्तेन ईशत माघशर्ठ०सो ध्रुवा अस्मिन्गोपतौ स्यात बह्वीर्यजमानस्य पशून्याहि॥ २॥ (सा०) अग्न

अयं पश्चाद्विश्वव्यचास्तस्य चक्षुर्वैश्वव्यचसं वर्षाश्चाक्षुष्यो जगती वार्षी जगत्या ऋक्समम‍ृक्समाच्छुक्रः शुक्रात्सप्तदशः सप्तदशाद्वैरूपं जमदग्नि-र्ऋषिः प्रजापतिगृहीतया त्वया चक्षुर्गृह्णामि प्रजाभ्यः स्वाहा॥ ४६॥

अयं पुरो भुवस्तस्य प्राणो भौवायनो वसन्तः प्राणायनो गायत्री वासन्ती गायत्र्यै गायत्रम् गायत्रादुपार्ठ०शुरुपार्ठ० शोस्त्रिवृत्त्रिवृतो रथन्तरं वसिष्ठ ऋषिः प्रजापतिगृहीतया त्वया प्राणं गृह्णामि प्रजाभ्यः स्वाहा॥ ४७॥

अत्र पितरो मादयध्वं यथाभागमावृषायध्वम्। अमीमदन्त पितरो यथाभागमावृषायिषत स्वाहा॥ ४८॥

तं पत्नीभिरनुगच्छेमदेवाः पुत्रैर्भ्रातृभिरुत वा हिरण्यैः। नाकं गृभ्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिवः स्वाहा॥ ४९॥

अदित्यै रास्नासीन्द्राण्या उष्णीषः। पूषासि घर्माय दीष्व स्वाहा॥ ५०॥

अम्बेऽअम्बिकेऽम्बालिके न मा नयति कश्चन। ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् स्वाहा॥ ५१॥

इन्द्रायाहि धियेषितो विप्रजूतः सुतावतः। उप ब्रह्माणि वाघतः स्वाहा॥ ५२॥

इन्द्रस्य क्रोडोऽदित्यै पाजस्यं दिशां जत्रवोऽदित्यै भसज्जीमूतान्हृदयौ-पशेनान्तरिक्षं पुरीतता नभ उदर्येण चक्रवाकौ मतस्नाभ्यां दिवं वृक्काभ्यां गिरीन्प्लाशिभिरुपलान्प्लीहा वल्मीकान्क्लोमभिग्लौंभिर्गुल्मान्हिराभिः स्त्रवन्तीर्हृदान्कुक्षिभ्यार्ठ० समुद्रमुदरेण वैश्वानरं भस्मना स्वाहा॥ ५३॥

अम्बेऽअम्बिकेऽम्बालिके न मा नयति कश्चन। ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् स्वाहा॥ ५४॥

आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्। भवा वाजस्य सङ्गथे स्वाहा॥ ५५॥

या ते रुद्र शिवा तनूरघोराऽपापकाशिनी। तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि स्वाहा॥ ५६॥

समख्ये देव्या धिया सन्दक्षिणयोरुचक्षसा। मा म आयुः प्रमीषीर्मो अहं तव वीरं विदेय तव देवि संदृशि स्वाहा॥ ५७॥

अथवा

## केवलं नामाऽनुक्रमेण सर्वतोभद्रदेवताहोमः

आचार्य ॐ ब्रह्मणे स्वाहा से ॐ वैनायक्यै स्वाहा तक के निम्न नाम मन्त्रों का उच्चारण करते हुए यजमान से सर्वतोभद्रदेवताओं के लिए हवन करावें—

**ॐ ब्रह्मणे स्वाहा। ॐ सोमाय स्वाहा। ॐ ईशानाय स्वाहा। ॐ इन्द्राय स्वाहा। ॐ अग्नये स्वाहा। ॐ यमाय स्वाहा। ॐ निर्ऋतये स्वाहा। ॐ वरुणाय स्वाहा। ॐ वायवे स्वाहा। ॐ अष्टवसुभ्यो स्वाहा। ॐ एकादशरुद्रेभ्यः स्वाहा। ॐ द्वादशा-दित्येभ्यः स्वाहा। ॐ अश्विभ्यां स्वाहा। ॐ सपैतृकविश्वेभ्यो देवेभ्यः स्वाहा। ॐ सप्तयक्षेभ्यः स्वाहा। ॐ नागेभ्यः स्वाहा। ॐ गन्धर्वाप्सरोभ्यः स्वाहा। ॐ स्कन्दाय स्वाहा। ॐ नन्दीश्वराय स्वाहा। ॐ शूलाय स्वाहा। ॐ महाकालाय स्वाहा। ॐ दक्षादिभ्यः स्वाहा। ॐ दुर्गायै स्वाहा। ॐ विष्णवे स्वाहा। स्वधायै स्वाहा। ॐ मृत्युरोगेभ्य स्वाहा। ॐ गणपतये स्वाहा। ॐ अद्भ्य स्वाहा। ॐ मरुद्भ्यः स्वाहा। ॐ पृथिव्यै स्वाहा। ॐ गङ्गादिनदीभ्यः स्वाहा। ॐ सप्तसागरेभ्यः स्वाहा। ॐ मेरवे स्वाहा। ॐ गदायै स्वाहा। ॐ त्रिशूलाय स्वाहा। ॐ व्रजाय स्वाहा। ॐ शक्तये स्वाहा। ॐ दण्डाय स्वाहा। ॐ खड्गाय स्वाहा। ॐ पाशाय स्वाहा। ॐ अङ्कुशाय स्वाहा। ॐ गौतमाय स्वाहा। ॐ भरद्वाजाय स्वाहा। ॐ विश्वामित्राय स्वाहा। ॐ कश्यपाय स्वाहा। ॐ जमदग्नये स्वाहा। ॐ वसिष्ठाय स्वाहा। ॐ अत्रये स्वाहा। ॐ अरुन्धत्यै स्वाहा। ॐ ऐन्द्र्यै स्वाहा। ॐ कौमार्यै स्वाहा। ॐ ब्राह्म्यै स्वाहा। ॐ वाराह्यै स्वाहा। ॐ चामुण्डायै स्वाहा। ॐ वैष्णव्यै स्वाहा। ॐ माहेश्वर्यै स्वाहा। ॐ वैनायक्यै स्वाहा।**

## योगिनीहोम:

आचार्य निम्न मन्त्रों का उच्चारण करते हुए कुण्ड योगिनी होम यजमान से करावें—

ॐ तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम्। पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये स्वाहा॥ १॥

आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्यः शूर इषव्योऽति-व्याधी महारथो जायतां दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् स्वाहा॥ २॥

महाँ२॥ इन्द्रो वज्रहस्तः षोडशी शर्म यच्छतु। हन्तु पाप्मानं योऽस्मान् द्वेष्टि। उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा स्वाहा॥ ३॥

सद्योजातो व्यमिमीत यज्ञमग्निर्देवानामभवत्पुरोगाः। अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहा कृतꣳ हविरदन्तु देवाः स्वाहा॥ ४॥

आदित्यं गर्भं पयसा समङ्ग्धि सहस्रस्य प्रतिमां विश्वरूपम्। परिवृङ्ग्धि हरसा माभिमर्ꣳस्थाः शतायुषं कृणुहि चीयमानः स्वाहा॥ ५॥

स्वर्ण घर्मः स्वाहा स्वर्णार्कः स्वाहा स्वर्ण शुक्रः स्वाहा स्वर्ण ज्योतिः स्वाहा स्वर्ण सूर्यः स्वाहा॥ ६॥

सत्यं च मे श्रद्धा च मे जगच्च मे धनं च मे विश्वं च मे महश्च मे क्रीडा च मे मोदश्च मे जातं च मे जनिष्यमाणं च मे सूक्तं च मे सुकृतं च मे यज्ञेन कल्पन्ताम् स्वाहा॥ ७॥

भायै दार्वाहारं प्रभाया अग्न्येधं ब्रध्नस्य विष्टप्रायाभिषेक्तारं वर्षिष्ठाय नाकाय परिवेष्टारं देवलोकाय पेशितारं मनुष्यलोकाय प्रकरितारꣳ सर्वेभ्यो लोकेभ्य उपसेक्तारमवऋत्यै वधायोपमन्थितारं मेधाय वासः पल्पूलीं प्रकामाय रजयित्रीम् स्वाहा॥ ८॥

जिह्वा मे भद्रं वाङ्महो मनो मन्युः स्वराड्भामः॥ मोदाः प्रमोदा अङ्गुलीरङ्गानि मित्रं मे सहः स्वाहा॥ ९॥

ॐ हिङ्काराय स्वाहा हिङ्कृताय स्वाहा क्रन्दते स्वाहाऽवक्रन्दाय स्वाहा प्रोथते स्वाहा प्रप्रोथाय स्वाहा गन्धाय स्वाहा घ्राताय स्वाहा निविष्टाय स्वाहोपविष्टाय स्वाहा संदिताय स्वाहा वल्गते स्वाहासीनाय स्वाहा शयानाय स्वाहा स्वपते स्वाहा जाग्रते स्वाहा कूजते स्वाहा प्रबुद्धाय स्वाहा विजृम्भमाणाय स्वाहा विचृताय स्वाहा सर्ठ०हानाय स्वाहोपस्थिताय स्वाहायनाय स्वाहा प्रायाणाय स्वाहा॥ १०॥

अग्निश्च मे घर्मश्च मेऽर्कश्च मे सूर्यश्च मे प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मेऽदितिश्च मे दितिश्च मे द्यौश्च मेऽङ्गुलयः शक्करयो दिशश्च मे यज्ञेन कल्पन्ताम् स्वाहा॥ ११॥

पूषन् तव व्रते वयं न रिष्येम कदाचन। स्तोतारस्त इह स्मसि स्वाहा॥ १२॥

वेद्या वेदिः समाप्यते बर्हिषा बर्हिरिन्द्रियम्। यूपेन यूप आप्यते प्रणीतो अग्निरग्निना स्वाहा॥ १३॥

अयमग्निः सहस्त्रिणो वाजस्य शतिनस्पतिः। मूर्धा कवी रयीणाम् स्वाहा॥ १४॥

इमं मे वरुण श्रुधी हवमद्या च मृडय। त्वामवस्युराचके स्वाहा॥ १५॥

यमाय त्वा मखाय त्वा सूर्यस्य त्वा तपसे। देवस्त्वा सविता मध्वानक्तु। पृथिव्याः सर्ठ० स्पृशस्पाहि। अर्चिरसि शोचिरसि तपोऽसि स्वाहा॥ १६॥

यमेन दत्तं त्रित एनमायुनगिन्द्र एणं प्रथमो अध्यतिष्ठत्। गन्धर्वो अस्य रशनामगृभ्णात्सूरादश्वं वसवो निरतष्ट स्वाहा॥ १७॥

मित्रस्य चर्षणीधृतोऽवो देवस्य सानसि। द्युम्नं चित्रश्रवस्तमम् स्वाहा॥ १८॥ अग्ने ब्रह्म गृभ्णीष्व धरुणमस्यन्तरिक्षं दर्ठ०ह ब्रह्मवनि

त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय। धर्त्रमसि दिवं दृꣳह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय। विश्वाभ्यस्त्वाशाभ्य उपदधामि चितः स्थोर्ध्वचितो भृगूणामङ्गिरसां तपसा तप्यध्वम् स्वाहा॥ १९॥

भग प्रणेतर्भग सत्यराधो भगेमां धियमुदवा ददन्नः। भग प्र नो जनय गोभिरश्वैर्भग प्र नृभिर्नृवन्तः स्याम स्वाहा॥ २०॥

सुपर्णोऽसि गरुत्मांस्त्रिवृत्ते शिरो गायत्रं चक्षुर्बृहद्रथन्तरे पक्षौ। स्तोम आत्मा छन्दाꣳस्यङ्गानि यजूꣳषि नाम। साम ते तनूर्वामदेव्यं यज्ञायज्ञियं पुच्छं धिष्ण्याः शफाः। सुपर्णोसि गरुत्मान्दिवं गच्छ स्वः पत स्वाहा॥ २१॥

पितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः। अक्षन्पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरः पितरः शुन्धध्वम् स्वाहा॥ २२॥

या ते रुद्र शिवा तनूरघोराऽपापकाशिनी। तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि स्वाहा॥ २३॥

वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः। करतां नः सुराधं सः स्वाहा॥ २४॥

हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिर्दुरोणसत्। नृषद्वरसदृत-सद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् स्वाहा॥ २५॥

सुसंदृशं त्वा वयं मघवन्वन्दिषीमहि। प्र नूनं पूर्णबन्धुरः स्तुतो यासि वशाँ अनु योजा न्विन्द्र ते हरी स्वाहा॥ २६॥

प्रतिपदसि प्रतिपदे त्वानुपदस्यनुपदे त्वा सम्पदसि सम्पदे त्वा तेजोऽसि तेजसे त्वा स्वाहा॥ २७॥

देवीरापो अपां न पाद्यो व ऊर्मिर्हविष्य इन्द्रिया वान्मदिन्तमः। तं देवेभ्यो देवत्रा दत्त शुक्रपेभ्यो येषां भाग स्थ स्वाहा स्वाहा॥ २८॥

हविष्मतीरिमा आपो हविष्माँ २ आ विवासति। हविष्यमान्देवो अध्वरो हविषमाँ २॥ अस्तु सूर्यः स्वाहा॥ २९॥

श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुं म इषाण सर्वलोकं म इषाण स्वाहा॥ ३०॥

भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः। दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम् स्वाहा॥ ३१॥

कदाचनः स्तरीरसि नेन्द्र सश्चसि दाशुषे। उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यत आदित्येभ्यस्त्वा स्वाहा॥ ३२॥

भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवार्ठ० सस्तनूभिर्व्यशेमहि देवहितं यदायुः स्वाहा॥ ३३॥

इषे त्वोर्ज्जे त्वा वायव स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्न्या इन्द्राय भागं प्रजावतीरनमीवा अयक्ष्मा मा वस्तेन ईशत माघशर्ठ०सो ध्रुवा अस्मिगोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि स्वाहा॥ ३४॥

देवी द्यावापृथिवी मखस्य वामद्य शिरो राध्यासं देवयजने पृथिव्याः। मखाय त्वा मखस्य त्वा शीर्ष्णे स्वाहा॥ ३५॥

विश्वानि देव सवितर्दुरितानि परासुव। यद्भद्रं तन्न आसुव स्वाहा॥ ३६॥

असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य। अन्यमस्म-दिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु स्वाहा॥ ३७॥

अग्निश्च म आपश्च मे वीरुधश्च म ओषधयश्च मे कृष्टपच्याश्च मेऽकृष्टपच्याश्च मे ग्राम्याश्च मे पशव आरण्याश्च मे वित्तं च मे वित्तिश्च मे भूतं च मे भूतिश्च मे यज्ञेन कल्पन्ताम् स्वाहा॥ ३८॥

बह्वीनां पिता बहुरस्य पुत्रश्चिश्चाकृणोति समनावगत्य। इषुधिः संकाः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः स्वाहा॥ ३९॥

नमस्ते रुद्र मन्यव उतो त इषवे नमः। बाहुभ्यामुत ते नमः स्वाहा॥ ४०॥

ऋतं च मेऽमृतं च मेऽयक्ष्मं च मेऽनामयच्च मे जीवातुश्च मे दीर्घायुत्वं च मेऽनमित्रं च मेऽभयं च मे सुखं च मे शयनं च सूषाश्च मे सुदिनं च मे यज्ञेन कल्पन्ताम् स्वाहा॥ ४१॥

ते आचरन्ती समनेव योषा मातेव पुत्रं बिभृतामुपस्थे। अप शत्रून्विध्यतार्ठ० संविदाने आर्त्नी इमे विष्फुरन्ती अमित्रान् स्वाहा॥ ४२॥

वेद्या वेदिः समाप्यते बर्हिषा बर्हिरिन्द्रियम्। यूपेन यूप आप्यते प्रणीतो अग्निरग्निना स्वाहा॥ ४३॥

पावका नः सरस्वती वाजेभिर्वाजिनीवति। यज्ञं वष्टु धियावसुः स्वाहा॥ ४४॥

अस्कन्नमद्य देवेभ्य आज्यर्ठ०संभ्रियासमङ्घ्रिणा विष्णो मा त्वावक्रमिषं वसुमतीमग्ने ते च्छायामुपस्थेषं विष्णोः स्थानमसीत इन्द्रो वीर्यमकृणोदूर्ध्वोध्वर आस्थात् स्वाहा॥ ४५॥

तीव्रान्घोषान्कृण्वते वृषपाणयोऽश्वा रथेभिः सहवाजयन्तः। अवक्रामन्तः प्रपदैरमित्रान्क्षिणन्तिशत्रूं१। रनपव्ययन्तः स्वाहा॥ ४६॥

मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्। पिपृतां नो भरीमभिः स्वाहा॥ ४७॥

उपयामगृहीतोऽसि सावित्रोऽसि चनोधाश्चनोधा असि चनो मयि धेहि। जिन्व यज्ञं जिन्व यज्ञपतिं भगाय देवाय त्वा सवित्रे स्वाहा॥ ४८॥

आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्। भवा वाजस्य संगथे स्वाहा॥ ४९॥

कार्षिरसि समुद्रस्य त्वाक्षित्या उन्नयामि। समापो अद्भिरग्मत समोषधीभिरोषधीः स्वाहा॥ ५०॥

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्-मृत्योर्मुक्षीय माऽमृतात् स्वाहा॥ त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम्। उर्वारुकमिव बन्धनादितो मुक्षीय मामुतः स्वाहा॥ ५१॥

अम्बेअम्बिकेऽम्बालिके न मा नयति कश्चन। ससस्त्यश्वकः सुभद्रिकाम्काम्पीलवासिनीम् स्वाहा॥ ५२॥

विष्णो रराटमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोऽसि। वैष्णवमसि विष्णवे त्वा स्वाहा॥ ५३॥

ब्राह्मणमद्य विदेयं पितृमन्तं पैतृमत्त्यमृषिमार्षेयर्ठ० सुधातुदक्षिणम्। अस्मद्राता देवता गच्छत प्रदातारमाविशत स्वाहा॥ ५४॥

आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः। देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे स्वाहा॥ ५५॥

एका च मे तिस्रश्च मे तिस्रश्च मे पञ्च च मे पञ्च मे सप्त च मे सप्त च मे नव च मे नव च म एकादश च म एकादश च मे त्रयोदश च मे त्रयोदश च मे पञ्चदश च मे पञ्चदश च मे सप्तदश च मे सप्तदश च मे नवदश च मे नवदश च म एकविर्ठ०शतिश्च म एकविर्ठ०शतिश्च मे त्रयोविर्ठ०शतिश्च मे त्रयोविर्ठ०शतिश्च मे पञ्चविर्ठ०शतिश्च मे पञ्चविर्ठ० शतिश्च मे सप्तविर्ठ०शतिश्च मे सप्तविर्ठ०शतिश्च मे नवविर्ठ०शतिश्च मे नवविर्ठ०शतिश्च म एकत्रिर्ठ०शच्च म एकत्रिर्ठ०शच्च मे त्रयस्त्रिर्ठ० शच्च मे यज्ञेन कल्पन्ताम् स्वाहा॥ ५६॥

ब्रह्माणि मे मतयः शर्ठ० सुतासः शुष्म इयर्ति प्रभृतो मे अद्रिः। आशासते प्रतिहर्यन्त्युक्थेमा हरी वहतस्ता नो अच्छ स्वाहा॥ ५७॥

असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम्। तेषार्ठ० सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा॥ ५८॥

अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः। हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमार्ठ०सं परिपातु विश्वतः स्वाहा॥ ५९॥

तिस्त्रस्त्रेधा सरस्वत्यश्विना भारतीडा। तीव्रं परिस्त्रुता सोममिन्द्राय सुषुवुर्मदम् स्वाहा॥ ६०॥

सरस्वती योन्यां गर्भमन्तरश्विभ्यां पत्नी सुकृतं बिभर्ति। अपार्ठ० रसेन वरुणो न साम्नेन्द्रर्ठ० श्रियै जनयन्नप्सु राजा स्वाहा॥ ६१॥

इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्यपार्ठ० सुरे स्वाहा स्वाहा॥ ६२॥

वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रममुष्मै देहि वृषसेनोऽसिराष्ट्रदा राष्ट्रं मे देहि स्वाहा वृषसेनोऽसि राष्ट्रदा राष्ट्रममुष्मै देहि स्वाहा॥ ६३॥

मृगो न भीमः कुचरो गिरिष्ठाः परावत आजगन्था परस्याः। सृकर्ठ० सर्ठ०शाय पविमिन्द्र तिग्मं वि शत्रून् ताढि वि मृधो नुदस्व स्वाहा॥ ६४॥

अथवा

## केवलं नामाऽनुक्रमेण योगिनीहोमः

आचार्य और ब्राह्मण ॐ गजाननायै स्वाहा से ॐ मृगलोचनायै स्वाहा तक के नाम मन्त्रों का उच्चारण करते हुए यजमान से कुण्ड में योगिनीहोम करावें—

ॐ गजाननायै स्वाहा। ॐ सिंहमुख्यै स्वाहा। ॐ गृध्रास्यायै स्वाहा। ॐ काकतुण्डिकायै स्वाहा। ॐ उष्ट्रग्रीवायै स्वाहा। ॐ हयग्रीवायै स्वाहा। ॐ वाराह्यै स्वाहा। ॐ शरभाननायै स्वाहा। ॐ उलूकिकायै स्वाहा। ॐ शिवारावायै स्वाहा। ॐ मयूरायै स्वाहा। ॐ विकटाननायै स्वाहा। ॐ अष्टवक्त्रायै स्वाहा। ॐ कोटराक्ष्यै स्वाहा। ॐ कुब्जायै स्वाहा। ॐ विकटलोचनायै स्वाहा। ॐ शुष्कोदर्यै स्वाहा। ॐ ललजिह्वायै स्वाहा। ॐ श्वदष्ट्रायै स्वाहा। ॐ वानराननायै स्वाहा। ॐ ऋक्षाक्ष्यै स्वाहा। ॐ केकराक्ष्यै स्वाहा। ॐ बृहत्तुण्डायै स्वाहा। ॐ सुराप्रियायै स्वाहा। ॐ कपालहस्तायै स्वाहा। ॐ रक्ताक्ष्यै स्वाहा। ॐ शुक्यै स्वाहा। ॐ श्येन्यै स्वाहा। ॐ

कपोतिकायै स्वाहा। ॐ पाशहस्तायै स्वाहा। ॐ दण्डहस्तायै स्वाहा। ॐ प्रचण्डायै स्वाहा। ॐ चण्डविक्रमायै स्वाहा। ॐ शिशुघ्न्यै स्वाहा। ॐ पापहन्त्र्यै स्वाहा। ॐ काल्यै स्वाहा। ॐ रुधिरपायिन्यै स्वाहा। ॐ वसाधयायै स्वाहा। ॐ गर्भभक्षायै स्वाहा। ॐ शवहस्तायै स्वाहा। ॐ आन्त्रमालिन्यै स्वाहा। ॐ स्थूलकेश्यै स्वाहा। ॐ बृहत्कुक्ष्यै स्वाहा। ॐ सर्पास्यायै स्वाहा। ॐ प्रेतवाहिन्यै स्वाहा। ॐ दन्दशूकरायै स्वाहा। ॐ क्रौञ्च्यै स्वाहा। ॐ मृगशीर्षायै स्वाहा। ॐ वृषाननायै स्वाहा। ॐ व्यात्तास्यायै स्वाहा। ॐ धूम्रनिश्वासायै स्वाहा। ॐ व्योमैकचरणोर्ध्वदृशे स्वाहा। ॐ तापिन्यै स्वाहा। ॐ शोषिणीदृष्ट्यै स्वाहा। ॐ कोटर्यै स्वाहा। ॐ स्थूलनासिकायै स्वाहा। ॐ विद्युत्प्रभायै स्वाहा। ॐ बलाकास्यायै स्वाहा। ॐ मार्जायै स्वाहा। ॐ कटपूतनायै स्वाहा। ॐ अट्टाट्टहासायै स्वाहा। ॐ कामाक्ष्यै स्वाहा। ॐ मृगाक्ष्यै स्वाहा। ॐ मृगलोचनायै स्वाहा।

## क्षेत्रपालहोमः

आचार्य निम्न मन्त्रों का उच्चारण करते हुए कुण्ड में यजमान से क्षेत्रपाल होम करावें—

ॐ इमौ ते पक्षावजरौ पतत्रिणौ याभ्यार्ठ० रक्षार्ठ०स्य पहर्ठ० स्यग्ने। ताभ्यां पतेम सुकृतामु लोकं यत्र ऋषयो जग्मुः प्रथमजाः पुराणाः स्वाहा॥ १॥

प्रथमा वार्ठ० सरथिना सुवर्णा देवौ पश्यन्तौ भुवनानि विश्वा। अपिप्रयं चोदना वां मिमाना होतारा ज्योतिः प्रदिशा दिशन्ता स्वाहा॥ २॥

इन्द्रस्य वज्रो मरुतामनीकं मित्रस्य गर्भो वरुणस्य नाभिः। सेमां नो हव्यदातिं जुषाणो देव रथ प्रतिहव्या गृभाय स्वाहा॥ ३॥

एवेदिन्द्रं वृषणं वज्रबाहुं वसिष्ठासो अभ्यर्चन्त्यर्कैः। स नः स्तुतो वीरवद्धातु गोमद्यूयं पात स्वस्तिभिः सदा नः स्वाहा॥ ४॥

ॐ उक्षा समुद्रो अरुणः सुपर्णः पूर्वस्य योनिं पितुराविवेश। मध्ये दिवो निहितः पृश्निरश्मा विचक्रमे रजसस्पात्यन्तौ स्वाहा॥ ५॥

यद्देवा देवहेडनं देवासश्चकृमा वयम्। अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वर्ठ०हसः स्वाहा॥ ६॥

स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यः। वरिवोवित्परिस्त्रव स्वाहा॥ ७॥

बाहू मे बलमिन्द्रियर्ठ० हस्तौ मे कर्म वीर्यम्। आत्मा क्षत्रमुरो मम स्वाहा॥ ८॥

मुञ्चन्तु मा शपथ्यादथो वरुण्यादुत। अथो यमस्य षड्वीशात्सर्व-स्माद्देवकिल्बिषात् स्वाहा॥ ९॥

ॐ कुर्वन्नेवेह कर्माणि जिजीविषेच्छतर्ठ० समाः। एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे स्वाहा॥ १०॥

सन्नः सिन्धुरवभृथायोद्यतः समुद्रोऽभ्यवह्रियमाणः सलिलः प्रप्लुतो ययोरोजसा स्कभिता रजोर्ठ०सि वीर्येभिर्वीरतमा शविष्ठा। या पत्येते अप्रतीता सहोभिर्विष्णू अगन्वरुणा पूर्वहूतौ स्वाहा॥ ११॥

नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो विश्वरूपेभ्यो विश्वरूपेभ्यश्च वो नमः स्वाहा॥ १२॥

अर्मेभ्यो हस्तिपं जवायाश्वपं पुष्ट्यै गोपालं वीर्यायाविपालं तेजसेऽजपालमिरायै कीनाशं कीलालाय सुराकारं भद्राय गृहपर्ठ०श्रेयसे वित्तधमाध्यक्ष्यायानुक्षत्तारम् स्वाहा॥ १३॥

या ओषधीः पूर्वा जाता देवभ्यस्त्रियुगं पुरा। मनैनु बभ्रूणा-महर्ठ०शतं धामानि सप्त च स्वाहा॥ १४॥

त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम्। उर्वारुकमिव बन्धनादितो मुक्षीय मामुतः स्वाहा॥ १५॥

देवसवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय। दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाजं नः स्वदतु स्वाहा स्वाहा॥ १६॥

सीसेन तन्त्रं मनसा मनीषिण ऊर्णासूत्रेण कवयो वयन्ति। अश्विना यज्ञर्ठ० सविता सरस्वतीन्द्रस्य रूपं वरुणो भिषजयन् स्वाहा॥ १७॥

आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम्। संक्रन्दनोऽनिमष एकवीरः शतर्ठ० सेना अजयत्साकमिन्द्रः स्वाहा॥ १८॥

इमर्ठ० साहस्त्रर्ठ० शतधारमुत्सं व्यच्यमानर्ठ० सरिरस्य मध्ये। घृतं दुहाना-मदितिं जनायाग्ने मा हिर्ठ०सीः परमे व्योमन्। गवयमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद। गवयं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु स्वाहा॥ १९॥

कुम्भो वनिष्ठुर्जनिता शचीभिर्यस्मिन्नग्रे योन्यां गर्भो अन्तः। प्लाशिर्व्यक्तः शतधार उत्सो दुहे न कुम्भी स्वधां पितृभ्यः स्वाहा॥ २०॥

आक्रन्दय बलमोजो न आधा निष्टनिहि दुरिताबाधमानः। अपप्रोथ दुन्दुभे दुच्छुना इत इन्द्रस्य मुष्टिरसि वीडयस्व स्वाहा॥ २१॥

इन्द्रायाहि तूतुजान उप ब्रह्माणि हरिवः। सुते दधिष्व नश्चनः स्वाहा॥ २२॥

चन्द्रमा अप्स्वन्तरा सुपर्णो धावते दिवि। रयिं पिशङ्गं बहुलं पुरुस्पृहर्ठ० हरिरेति कनिक्रदत् स्वाहा॥ २३॥

गणानां त्वा गणपतिर्ठ० हवामहे प्रियाणां त्वा प्रियपतिर्ठ० हवामहे निधीनां त्वा निधिपतिर्ठ० हवामहे वसो मम। आहमजानि गर्भधमा त्वमजासि गर्भधम् स्वाहा॥ २४॥

उग्रं लोहितेन मित्रर्ठ० सौव्रत्येन रुद्रं दौर्व्रत्येनेन्द्रं प्रक्रीडेन मरुतो बलेन साध्यान्प्रमुदा। भवस्य कण्ठ्यर्ठ० रुद्रस्यान्तः पार्श्व्यं महादेवस्य यकृच्छर्वस्य वनिष्ठुः पशुपतेः पुरीतत् स्वाहा॥ २५॥

पवित्रेण पुनीहि मा शुक्रेण देव दीद्यत्। अग्ने क्रत्वा क्रतूँरनु॥ रनु आजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः। पुनरूर्जा निवर्तस्व सा नः सहस्त्रं धुक्ष्वोरुधारा पयस्वती पुनर्माविशताद्रयिः स्वाहा॥ २७॥

वायो शुक्रो अयामि ते मध्वो अग्रं दिविष्टिषु। आयाहि सोमपीतये स्पार्हो देव नियुत्वता स्वाहा॥ २८॥

दैव्या होतारा ऊर्ध्वमध्वरं नोऽग्नेर्जिह्वामभिगृणीतम्। कृणुतं नः स्विष्टिम् स्वाहा॥ २९॥

त्रीणि त आहुर्दिवि बन्धनानि त्रीण्यप्सु त्रीण्यन्तःसमुद्रे। उतेव मे वरुणश्छन्त्स्यर्वन् यत्रा त आहुः परमं जनित्रम् स्वाहा॥ ३०॥

प्रतिश्रुत्काया अर्तनं घोषाय भषमन्ताय बहुवादिनमनन्ताय मूकर्ठ० शब्दायाडम्बराघातं महसे वीणावादं क्रोशाय तूणवध्ममवरस्पराय शङ्खध्मं वनाय वनपमन्यतोऽरण्याय दावपम् स्वाहा॥ ३१॥

शुद्धवालः सर्वशुद्धवालो मणिवालस्त आश्विनाः श्येतः श्येताक्षोऽरुणस्ते रुद्राय पशुपतये कर्णा यामा अवलिप्ता रौद्रा नभोरूपाः पार्जन्याः स्वाहा॥ ३२॥

वनस्पते वीड्वङ्गो हि भूया अस्मत्सखाप्रतरणः सुवीरः। गोभिः सन्नद्धो असिवीडय स्वास्थाता ते जयतु जेत्वानि स्वाहा॥ ३३॥

सुपर्णां वस्ते मृगो अस्यादन्तो गोभिः संनद्धा पतति प्रसूता। यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यर्ठ०सन् स्वाहा॥ ३४॥

अग्ने अच्छा वदेह नः प्रति नः सुमना भव। प्र नो यच्छ सहस्रजित्त्वर्ठ०हि धनदा असि स्वाहा॥ ३५॥

भद्रं कर्णेभिःशृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरै-रङ्गैस्तुष्टुवार्ठ० सस्तनुभिर्व्यशेमहि देव हितं यदायुः स्वाहा॥ ३६॥

अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः। विश्वा यदजयः स्पृधः स्वाहा॥ ३७॥

वातं प्राणेनापानेन नासिके उपयाममधरेणौष्ठेन सदुत्तरेण प्रकाशेनान्तरमनूकाशेन बाह्यं निवेष्यं मूर्ध्ना स्तनयित्नुं निर्बाधेनाशनिं मस्तिष्केण विद्युतं कनीनकाभ्यां कर्णाभ्यार्ठ० श्रोतर्ठ० श्रोत्राभ्यां कर्णौ तेदनीमधरकण्ठेनापः शुष्ककण्ठेन चित्तं मन्याभिरदितिर्ठ० शीर्ष्णा निर्ऋतिं निर्जल्पेन शीर्ष्णा संक्रोशैः प्राणान् रेष्माणर्ठ० स्तुपेन स्वाहा॥ ३८॥

इदर्ठ० हविः प्रजननं मे अस्तु दशवीरर्ठ० सर्वगणर्ठ० स्वस्तये। आत्मसनि प्रजासनि पशुसनि लोकसन्यभयसनि। अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धत्त स्वाहा॥ ३९॥

खड्गो वैश्वदेवः श्वा कृष्णः कर्णो गर्दभस्तरक्षुस्ते रक्षसामिन्द्राय सूकरः सिर्ठ०हो मारुतः कृकलासः पिप्पका शकुनिस्ते शरव्यायै विश्वेषां देवानां पृषतः स्वाहा॥ ४०॥

मृगो न भीमः कुचरो गिरिष्ठाः परावत आजगन्था परस्याः। सृकर्ठ०सर्ठ०शाय पविमिन्द्र तिग्मं वि शत्रून् ताढि वि मृधो नुदस्व स्वाहा॥ ४१॥

इन्दुर्दक्षः श्येन ऋतावा हिरण्यपक्षः शकुनो भुरण्युः। महान् सधस्थे ध्रुव आ निषत्तो नमस्ते अस्तु मा मा हिर्ठ०सीः स्वाहा॥ ४२॥

जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदामुपस्थे। अनाविद्धया तन्वा जय त्वर्ठ० स त्वा वर्मणो महिमा पिपर्तु स्वाहा॥ ४३॥

तीव्रान्घोषान्कृण्वते वृषपाणयोऽश्वा रथेभिः सह वाजयन्त। अवक्रामन्तः प्रपदैरमित्रान्क्षिणन्ति शत्रूं १॥ रनपव्ययन्तः स्वाहा॥ ४४॥

अग्निं दूतं पुरो दधे हव्यवाहमुप ब्रुवे॥ देवाँ२॥ आसादयादिह स्वाहा॥ ४५॥

अदित्यास्त्वा पृष्ठे सादयाम्यन्तरिक्षस्य धत्री विष्टम्भनीं दिशामधिपत्नीं भुवनानाम्। ऊर्मिर्द्रप्सो अपामसि विश्वकर्मा त ऋषिरश्विनाध्वर्यू सादयतामिह त्वा स्वाहा॥ ४६॥

द्यौस्ते पृथिव्यन्तरिक्षं वायुश्छिद्रं पृणातु ते। सूर्यस्ते नक्षत्रैः सह लोकं कृणोतु साधुया स्वाहा॥ ४७॥

संबर्हिरङ्क्तार्ठ०हविषा घृतेन समादित्यैर्वसुभिः संमरुद्भिः। समिन्द्रो विश्वदेवेभिरङ्क्ता दिव्यं नभो गच्छतु यत्स्वाहा॥ ४८॥

पवमानः सो अद्य नः पवित्रेण विचर्षणिः। यः पोता स पुनातु मा स्वाहा॥ ४९॥

अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त। इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत्पवन्ते स्वाहा॥ ५०॥

अथवा

## केवलं नामाऽनुक्रमेण क्षेत्रपालहोमः

ॐ अजराय स्वाहा से ॐ शुक्राय स्वाहा तक के पचास नाम मन्त्रों का आचार्य सहित सभी ब्राह्मण उच्चारण करते हुए यजमान से क्षेत्रपालहोम करावें।

**ॐ अजराय स्वाहा। ॐ व्यापकाय स्वाहा। ॐ इन्द्रचौराय स्वाहा। ॐ इन्द्रमूर्तये स्वाहा। ॐ उक्ष्णे स्वाहा। ॐ कूष्माण्डाय स्वाहा। ॐ वरुणाय स्वाहा। ॐ वटुकाय स्वाहा। ॐ विमुक्ताय स्वाहा। ॐ लिप्तकाय स्वाहा। ॐ नीललोकाय स्वाहा। ॐ एकदंष्ट्राय स्वाहा। ॐ ऐरावताय स्वाहा। ॐ ओषधीघ्नाय स्वाहा। ॐ बन्धनाय स्वाहा। ॐ दिव्यकरणाय स्वाहा। ॐ कम्बलाय स्वाहा। ॐ भीषणाय स्वाहा। ॐ गवयाय स्वाहा। ॐ घंटाय स्वाहा। ॐ व्यालाय स्वाहा। ॐ अंशवे स्वाहा। ॐ चन्द्रवारुणाय स्वाहा। ॐ घटाटोपाय स्वाहा। ॐ जटिलाय स्वाहा। ॐ क्रतवे स्वाहा। ॐ घण्टेश्वराय स्वाहा। ॐ विकटाय स्वाहा। ॐ मणिमाणाय स्वाहा। ॐ गणबन्धाय स्वाहा। ॐ मुण्डाय स्वाहा। ॐ बर्बूकराय स्वाहा। ॐ सुधापाय स्वाहा। ॐ वैनाय स्वाहा। ॐ पवनाय स्वाहा। ॐ ढुण्ढकरणाय स्वाहा। ॐ स्थविराय स्वाहा। ॐ दन्तुराय स्वाहा। ॐ धनदाय स्वाहा। ॐ नागकर्णाय स्वाहा। ॐ महाबलाय स्वाहा। ॐ फेत्काराय स्वाहा। ॐ वीरकाय स्वाहा। ॐ सिंहाय स्वाहा। ॐ मृगाय स्वाहा। ॐ यक्षाय स्वाहा। ॐ मेघवाहनाय स्वाहा। ॐ तीक्ष्णाय स्वाहा। ॐ अमराय स्वाहा। ॐ शुक्राय स्वाहा।**

## पीठदेवताहवनम्

आचार्य और ब्राह्मण 'ॐ मण्डूकाय स्वाहा' से 'ॐ धूमावती योगपीठाय स्वाहा' तक के आगे दिए हुए नाम मन्त्रों का उच्चारण करते हुए पीठदेवताओं का हवन यजमान से करावें—

ॐ मण्डूकाय स्वाहा। ॐ कालाग्नि रुद्राय स्वाहा। ॐ मूलप्रकृत्यै स्वाहा। ॐ आधारशक्तये स्वाहा। ॐ कूर्माय स्वाहा। ॐ शेषाय स्वाहा। ॐ वाराहाय स्वाहा। ॐ पृथिव्यै स्वाहा। ॐ सुधाम्बुधये स्वाहा। ॐ रत्नदीपाय स्वाहा। ॐ मेरवे स्वाहा। ॐ नन्दनवनाय स्वाहा। ॐ कल्पवृक्षाय स्वाहा। ॐ विचित्रानन्दभूम्यै स्वाहा। ॐ रत्नमन्दिराय स्वाहा। ॐ रत्नवेदिकायै स्वाहा। ॐ धर्मवारणाय स्वाहा। ॐ रत्नसिंहासनाय स्वाहा। ॐ धर्माय स्वाहा। ॐ ज्ञानाय स्वाहा। ॐ वैराग्याय स्वाहा। ॐ ऐश्वर्याय स्वाहा। ॐ अधर्माय स्वाहा। ॐ अज्ञानाय स्वाहा। ॐ अवैराग्याय स्वाहा। ॐ अनैश्वर्याय स्वाहा। ॐ आनन्दकन्दाय स्वाहा। ॐ संविन्नालाय स्वाहा। ॐ सर्वतत्त्वात्मक पद्माय स्वाहा। ॐ प्रकृतिमय पत्रेभ्यो स्वाहा। ॐ विकारमय केसरेभ्यो स्वाहा। ॐ पञ्चाशद्बीजाढ्य कर्णिकायै स्वाहा। ॐ अं द्वादश कलात्मने सूर्यमण्डलाय स्वाहा। ॐ उं षोडशकलात्मने सोममण्डलाय स्वाहा। ॐ मं दशकलात्मने वह्निमण्डलाय स्वाहा। ॐ सं सत्त्वाय स्वाहा। ॐ रं रजसे स्वाहा। ॐ तं तमसे स्वाहा। ॐ अं आत्मने स्वाहा। ॐ उं अन्तरात्मने स्वाहा। ॐ मं परमात्मने स्वाहा। ॐ ह्रीं ज्ञानात्मने स्वाहा। ॐ मां मायातत्त्वाय स्वाहा। ॐ कं कलत्त्वाय स्वाहा। ॐ विं विद्यातत्त्वाय स्वाहा। ॐ णं परतत्त्वाय स्वाहा। ॐ बं ब्रह्म प्रेताय स्वाहा। ॐ विं विष्णु प्रेताय स्वाहा। ॐ रुं रुद्र प्रेताय स्वाहा। ॐ इं ईश्वर प्रेताय स्वाहा। ॐ सं सदाशिव प्रेताय स्वाहा। ॐ सुधार्णवासनाय स्वाहा। ॐ प्रेताम्बुजासनाय स्वाहा। ॐ दिव्यासनाय स्वाहा। ॐ चक्रासनाय स्वाहा। ॐ सर्वयन्त्रासनाय स्वाहा। ॐ साध्यसिद्धासनाय स्वाहा। ॐ कामदायै स्वाहा। ॐ मानदायै स्वाहा। ॐ नक्तायै स्वाहा। ॐ मधुरायै स्वाहा। ॐ मधुराननायै स्वाहा। ॐ नर्मदायै स्वाहा। ॐ भोगदायै स्वाहा। ॐ नन्दायै स्वाहा। ॐ प्राणदायै स्वाहा। ॐ धूमावतीयोगपीठाय स्वाहा।

## आवरणदेवताहोमः

ॐ धूं धूं हृदयाय स्वाहा। ॐ धूं शिरसे स्वाहा। ॐ मां शिखायै वषट् स्वाहा। ॐ वं नमः कवचाय हुं स्वाहा। ॐ तिं नेत्रत्रयाय वषट् स्वाहा। ॐ स्वाहा अस्त्राय फट् स्वाहा। ॐ क्षुधायै स्वाहा। ॐ तृष्णायै स्वाहा। ॐ रत्यै स्वाहा। ॐ निद्रायै स्वाहा। ॐ निर्ऋत्यै स्वाहा। ॐ दुर्गत्यै स्वाहा। ॐ रुषायै स्वाहा। ॐ अक्षमायै स्वाहा। ॐ लं इन्द्राय स्वाहा। ॐ रं अग्नये तेजोऽधिपतये स्वाहा। ॐ मं यमाय स्वाहा। ॐ क्षं निर्ऋतिये स्वाहा। ॐ वं वरुणाय स्वाहा। ॐ यं वायवे स्वाहा। ॐ सं सोमाय स्वाहा। ॐ हं ईशान्ये स्वाहा। ॐ आं ब्रह्मणे स्वाहा। ॐ ह्रीं अनन्ताय स्वाहा। ॐ वं व्रजाय स्वाहा। ॐ शं शक्तये स्वाहा। ॐ दं दण्डाय स्वाहा। ॐ खं खंगाय स्वाहा। ॐ पां पाशाय स्वाहा। ॐ अं अंकुशाय स्वाहा। ॐ गं गदाय स्वाहा। ॐ शूं शूलाय स्वाहा। ॐ पं पद्माय स्वाहा। ॐ चं चक्राय स्वाहा।

## धूमावत्यष्टोत्तरशतनामावल्या होमः

आचार्य धूमावती के निम्न नामों का क्रमानुसार उच्चारण करते हुए यजमान से प्रत्येक नाममन्त्र के द्वारा कुण्ड में हवन करावें—

१. ॐ धूमावत्यै स्वाहा।
२. ॐ धूम्रवर्णायै स्वाहा।
३. ॐ धूम्रपानपरायणायै स्वाहा।
४. ॐ धूम्राक्षमथिन्यै स्वाहा।
५. ॐ धन्यायै स्वाहा।
६. ॐ धन्यस्थाननिवासिन्यै स्वाहा।
७. ॐ अघोराचारसन्तुष्टायै स्वाहा।
८. ॐ अघोराचारमण्डितायै स्वाहा।
९. ॐ अघोरमन्त्रसम्प्रीतायै स्वाहा।
१०. ॐ अघोरमन्त्रपूजितायै स्वाहा।
११. ॐ अट्टाट्टहासनिरतायै स्वाहा।
१२. ॐ मलिनाम्बरधारिण्यै स्वाहा।
१३. ॐ वृद्धायै स्वाहा।
१४. ॐ विरूपायै स्वाहा।
१५. ॐ विधवायै स्वाहा।
१६. ॐ विद्यायै स्वाहा।
१७. ॐ विरलद्विजायै स्वाहा।
१८. ॐ प्रवृद्धघोणायै स्वाहा।
१९. ॐ कुमुख्यै स्वाहा।
२०. ॐ कुटिलायै स्वाहा।
२१. ॐ कुटिलेक्षणायै स्वाहा।
२२. ॐ कराल्यै स्वाहा।

२३. ॐ करालास्यायै स्वाहा।
२४. ॐ कङ्काल्यै स्वाहा।
२५. ॐ शूर्पधारिण्यै स्वाहा।
२६. ॐ काकध्वजरथारूढायै स्वाहा।
२७. ॐ केवलायै स्वाहा।
२८. ॐ कठिनायै स्वाहा।
२९. ॐ कुह्वै स्वाहा।
३०. ॐ क्षुत्पिपासार्दितायै स्वाहा।
३१. ॐ नित्यायै स्वाहा।
३२. ॐ ललज्जिह्वायै स्वाहा।
३३. ॐ दिगम्बर्यै स्वाहा।
३४. ॐ दिर्घोदर्यै स्वाहा।
३५. ॐ दिर्घरवायै स्वाहा।
३६. ॐ दिर्घाङ्ग्यै स्वाहा।
३७. ॐ दीर्घमस्तकायै स्वाहा।
३८. ॐ विमुक्तकुन्तलायै स्वाहा।
३९. ॐ कीर्त्यायै स्वाहा।
४०. ॐ कैलासस्थानवासिन्यै स्वाहा।
४१. ॐ क्रूरायै स्वाहा।
४२. ॐ कालस्वरूपायै स्वाहा।
४३. ॐ कालचक्रप्रवर्तिन्यै स्वाहा।
४४. ॐ विवर्णायै स्वाहा।
४५. ॐ चञ्चलायै स्वाहा।
४६. ॐ दुष्टायै स्वाहा।
४७. ॐ दुष्टविध्वंसकारिण्यै स्वाहा।
४८. ॐ चण्ड्यै स्वाहा।
४९. ॐ चण्डस्वरूपायै स्वाहा।
५०. ॐ चामुण्डायै स्वाहा।
५१. ॐ चण्डनिःस्वनायै स्वाहा।
५२. ॐ चण्डवेगायै स्वाहा।
५३. ॐ चण्डगत्यै स्वाहा।
५४. ॐ चण्डविनाशिन्यै स्वाहा।
५५. ॐ मुण्डविनाशिन्यै स्वाहा।
५६. ॐ चाण्डालिन्यै स्वाहा।
५७. ॐ चित्ररेखायै स्वाहा।
५८. ॐ चित्राङ्ग्यै स्वाहा।
५९. ॐ चित्ररूपिण्यै स्वाहा।
६०. ॐ कृष्णायै स्वाहा।
६१. ॐ कपर्दिन्यै स्वाहा।
६२. ॐ कुल्लायै स्वाहा।
६३. ॐ कृष्णारूपायै स्वाहा।
६४. ॐ क्रियावत्यै स्वाहा।
६५. ॐ कुम्भस्तन्यै स्वाहा।
६६. ॐ महोन्मत्तायै स्वाहा।
६७. ॐ मदिरापानविह्वलायै स्वाहा।
६८. ॐ चतुर्भुजायै स्वाहा।
६९. ॐ ललज्जिह्वायै स्वाहा।
७०. ॐ शत्रुसंहारकारिण्यै स्वाहा।
७१. ॐ शवारूढायै स्वाहा।
७२. ॐ शवगतायै स्वाहा।
७३. ॐ श्मशानस्थानवासिन्यै स्वाहा।
७४. ॐ दुराराध्यायै स्वाहा।
७५. ॐ दुराचारायै स्वाहा।
७६. ॐ दुर्जनप्रीतिदायिन्यै स्वाहा।
७७. ॐ निर्मांसायै स्वाहा।
७८. ॐ निराकारायै स्वाहा।
७९. ॐ धूमहस्तायै स्वाहा।
८०. ॐ वरान्वितायै स्वाहा।

८१. ॐ कलहायै स्वाहा।
८२. ॐ कलिप्रीतायै स्वाहा।
८३. ॐ कलिकल्मषनाशिन्यै स्वाहा।
८४. ॐ महाकालस्वरूपायै स्वाहा।
८५. ॐ महाकालप्रपूजितायै स्वाहा।
८६. ॐ महादेवप्रियायै स्वाहा।
८७. ॐ मेधायै स्वाहा।
८८. ॐ महासङ्कटनाशिन्यै स्वाहा।
८९. ॐ भक्तप्रियायै स्वाहा।
९०. ॐ भक्तगत्यै स्वाहा।
९१. ॐ भक्तशत्रुविनाशिन्यै स्वाहा।
९२. ॐ भैरव्यै स्वाहा।
९३. ॐ भुवनायै स्वाहा।
९४. ॐ भीमायै स्वाहा।
९५. ॐ भारत्यै स्वाहा।
९६. ॐ भुवनात्मिकायै स्वाहा।
९७. ॐ भेरुण्डायै स्वाहा।
९८. ॐ भीमनयनायै स्वाहा।
९९. ॐ त्रिनेत्रायै स्वाहा।
१००. ॐ बहुरूपिण्यै स्वाहा।
१०१. ॐ त्रिलोकेश्यै स्वाहा।
१०२. ॐ त्रिकालज्ञायै स्वाहा।
१०३. ॐ त्रिस्वरूपायै स्वाहा।
१०४. ॐ त्रयीतनवे स्वाहा।
१०५. ॐ त्रिमूर्त्यै स्वाहा।
१०६. ॐ तन्व्यै स्वाहा।
१०७. ॐ त्रिशक्त्यै स्वाहा।
१०८. ॐ त्रिशूलिन्यै स्वाहा।

## अग्निपूजनम्

आचार्य निम्न वैदिक मंत्र का उच्चारण करके यजमान से अग्निदेवता का पूजन करावें—

**ॐ अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम॥ ॐ भूर्भुवः स्वः स्वाहा-स्वधायुताय मृडाग्नये वैश्वानराय नमः। इत्यग्निं गन्धपुष्पादीना सम्पूजयेत्।**

## स्विष्टकृद्धोमः

आचार्य बचे हुए शेष हविद्रव्य को प्रोक्षणीपात्र में ग्रहण कर अन्वारब्ध होकर यजमान को खड़ा करवाके स्विष्टकृत् होम करावें—

**ॐ अग्नये स्विष्टकृते स्वाहा - इदमग्नये स्विष्टकृते न मम।**

यह कहकर बचे हुए हविर्द्रव्य का प्रक्षेप प्रज्वलित अग्निकुण्ड में करें।

## भूरादिनवाहुतिभिर्होमः

ॐ भूः स्वाहा — इदमग्नये न मम। ॐ भुवः स्वाहा—इदं वायवे न मम। ॐ स्वः स्वाहा—इदं सूर्याय न मम।

ॐ त्वं नो अग्ने वरुणस्य विद्वान्देवस्य हेडो अवयासिसीष्ठाः। यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाठं०सि प्रमुमुग्ध्यस्मत् स्वाहा॥ इदमग्नीवरुणाभ्यां न मम॥

ॐ स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ। अवयक्ष्व नो वरुणठं० रराणो वीहि मृडीकठं० सुहवो न एधि स्वाहा॥ इदमग्नीवरुणाभ्यां न मम॥

ॐ अयाश्चाग्नेऽस्यनभिशस्तिपाश्च सत्यमित्वमया असि। अया नो यज्ञं वहास्यया नो धेहि भेषजठं० स्वाहा॥ इदमग्नये अयसे न मम॥

ॐ ये ते शतं वरुण ये सहस्त्रं यज्ञियाः पाशा वितता महान्तः। ते भिर्न्नो अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा॥ इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम॥

ॐ उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय। अथा वयमादित्य व्रते तवानागसो अदितये स्याम स्वाहा॥ इदं वरुणा-यादित्यादितये न मम॥ ॐ प्रजापतये स्वाहा, इदं प्रजापतये न मम।

## दशदिक्पालबलिः

आचार्य निम्न मन्त्रों और उनके आगे दिये गये वाक्यों का उच्चारण करते हुए यजमान से क्रमानुसार दशदिक्पालों को बलि प्रदान करावें—

**अग्न्यायतनस्य प्राच्याम्**—ॐ त्रातारमिन्द्रमवितारमिन्द्रठं० हवे हवे सुहवठं० शूरमिन्द्रम्। ह्वयामि शक्रं पुरुहूतमिन्दठं० स्वस्ति मघवा धात्विन्द्रः॥ ॐ इन्द्राय नमः। इन्द्राय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपदधिभाषभक्तबलिं समर्पयामि। भो इन्द्र! स्वां

दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव अनेन बलिदानेन इन्द्रः प्रीयताम्॥ १ ॥

आग्नेयाम्—ॐ त्वं नो अग्ने तव देव पायुभिर्मघोनो रक्ष तन्वश्च वन्द्य। त्राता तोकस्य तनये गवामस्य निमेषꣳ रक्षमाणस्तव व्रते॥ ॐ अग्नये नमः। अग्नये साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपदधिमाषभक्तबलिं समर्पयामि। भो अग्ने! स्वां दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव। अनेन बलिदानेन अग्निः प्रीयताम्॥ २॥

दक्षिणे—ॐ यमाय त्वाङ्गिरस्वते पितृमते स्वाहा। घर्माय स्वाहा घर्मः पित्रे॥ ॐ यमाय नमः। यमाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपदधिमाषभक्तबलिं समर्पयामि। भो यम! स्वां दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य आयुःकर्ता, क्षेमकर्ता, शान्तिकर्ता, पुष्टिकर्ता, तुष्टिकर्ता वरदो भव। अनेन बलिदानेन यमः प्रीयताम्॥ ३॥

नैर्ऋत्याम्—ॐ असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य। अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु॥ ॐ निर्ऋतये नमः। निर्ऋतये साङ्गाय सपरिवारायै सायुधायै सशक्तिकायै इमं सदीप-दधिमाषभक्तबलिं समर्पयामि। भो निर्ऋते! स्वां दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव। अनेन बलिदानेन निर्ऋतिः प्रीयताम्॥ ४॥

पश्चिमे—ॐ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुशꣳ स मा न आयुः प्रमोषीः॥ ॐ वरुणाय नमः। वरुणाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपदधिमाषभक्तबलिं समर्पयामि। भो वरुण! स्वां दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य आयुःकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव। अनेन बलिदानेन वरुणः प्रीयताम्॥ ५॥

वायव्याम्—ॐ आ नो नियुद्भिः शतिनीभिरध्वरꣳ सहस्त्रिणी-भिरुपयाहि यज्ञम्। वायो अस्मिन्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः॥ ॐ वायवे नमः। वायवे साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपदधिमाषभक्तबलिं समर्पयामि। भो वायो! स्वां दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव। अनेन बलिदानेन वायुः प्रीयताम्॥ ६॥

उत्तरे—ॐ वयꣳ सोम व्रते तव मनस्तनुषु बिभ्रतः। प्रजावन्तः सचेमहि॥ ॐ सोमाय नमः। सोमाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपदधिमाषभक्तबलिं समर्पयामि। भो सोम! स्वां दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव। अनेन बलिदानेन सोमः प्रीयताम्॥ ७॥

ईशान्याम्—ॐ तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम्। पूषा नो यथा वेदसामसद्वृधे रक्षितापायुरदब्धः स्वस्तये॥ ॐ ईशानाय नमः। ईशानाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपदधिमाषभक्तबलिं समर्पयामि। भो ईशान! स्वां दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य आयुःकर्ता क्षेमकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव। अनेन बलिदानेन ईशानः प्रीयताम्॥ ८॥

ईशानपूर्वयोर्मध्ये—ॐ अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः। यः शꣳ सते स्तुवते धायि पज्र इन्द्रज्येष्ठा अस्माँ२॥ अवन्तु देवाः॥ ॐ ब्रह्मणे नमः। ब्रह्मणे साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपदधिमाषभक्तबलिं समर्पयामि। भो ब्रह्मन्! स्वां दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव। अनेन बलिदानेन ब्रह्मा प्रीयताम्॥ ९॥

निर्ऋतिपश्चिमयोर्मध्ये—ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी। यच्छा नः शर्म सप्रथाः॥ ॐ अनन्ताय नमः। अनन्ताय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपदधिभाष-भक्तबलिं समर्पयामि। भो अनन्त! स्वां दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव अनेन बलिदानेन अनन्त प्रीयताम्॥ १०॥

(अथवा)

## एकतन्त्रेण दशदिक्पालबलिः

ॐ प्राच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहा दक्षिणायै दिशे स्वाहार्वाच्यै दिशे स्वाहा प्रतीच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहोदीच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहोर्ध्वायै दिशे स्वाहार्वाच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहा॥ ॐ इन्द्रादिभ्यो दशभ्यो दिक्पालेभ्यो नमः। ॐ इन्द्रादिदशदिक्पालेभ्यः साङ्गेभ्य सपरिवारेभ्य सायुधेभ्यः सशक्तिकेभ्यः इमान् सदीपदधिमाषभक्तबलीन् समर्पयामि। भो भो इन्द्रादिदशदिक्पालाः! स्वां स्वां दिशं रक्षत बलिं भक्षत मम सकुटुम्बस्य सपरिवारस्य आयुःकर्तारः क्षेमकर्तारः शान्तिकर्तारः पुष्टिकर्तारः तुष्टि-कर्तारः वरदाः भवत। अनेन बलिदानेन इन्द्रादिदशदिक्पालाः प्रीयन्ताम्।

## नवग्रहबलिः

ॐ आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च। हिरण्ययेन सविता रथेनादेवो याति भुवनानि पश्यन्॥ ॐ सूर्याय नमः। सूर्याय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय ईश्वराग्निरूपाधिदेवता-प्रत्यधिदेवता-सहिताय इमं सदीपदधिमाषभक्तबलिं समर्पयामि। भो सूर्य! इमं बलिं गृहाण मम सकुटुम्बस्य सपरिवारस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव। अनेन बलिदानेन सूर्यः प्रीयताम्॥ १॥

ॐ इमं देवा असपत्नर्ठ० सुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय। इमममुष्य पुत्रममुष्यै पुत्रमुस्यै विश एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानार्ठ० राजा॥ ॐ सोमाय नमः। सोमाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय उमाऽऽपो-रूपाधिदेवता—प्रत्यधिदेवतासहिताय इमं सदीपदधिमाषभक्तबलिं समर्पयामि। भो सोम! इमं बलिं गृहाण मम सकुटुम्बस्य सपरिवारस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव। अनेन बलिदानेन सोमः प्रीयताम्॥ २॥

ॐ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपार्ठ० रेतार्ठ० सि जिन्वति॥ ॐ भौमाय नमः। भौमाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय स्कन्दभूमिरूपाधिदेवता-प्रत्यधिदेवतासहिताय इमं सदीपदधिमाषभक्तबलिं समर्पयामि। भो भौम! इमं बलिं गृहाण मम सकुटुम्बस्य सपरिवारस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव। अनेन बलिदानेन भौमः प्रीयताम्॥ ३॥

ॐ उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्तेसर्ठ० सृजेथामयं च। अस्मिन्त्सधस्थे अध्युत्तरस्मिन् विश्वेदेवा यजमानश्च सीदत॥ ॐ बुधाय नमः। बुधाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय नारायण-विष्णुरूपाधिदेवता-प्रत्यधिदेवतासहिताय इमं सदीपदधिमाष-भक्तबलिं समर्पयामि। भो बुध! इमं बलिं गृहाण मम सकुटुम्बस्य सपरिवारस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव। अनेन बलिदानेन बुधः प्रीयताम्॥ ४॥

ॐ बृहस्पते अति यदर्यो अर्हाद्युमद्विभातिक्रतुमज्जनेषु। यद्दीद-यच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम्॥ ॐ बृहस्पतये नमः। बृहस्पतये साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय ब्रह्मेन्द्र-रूपाधिदेवता-प्रत्यधिदेवतासहिता इमं सदीपदधिमाषभक्तबलिं

समर्पयामि। भो बृहस्पते! इमं बलिं गृहाण मम सकुटुम्बस्य सपरिवारस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव। अनेन बलिदानेन बृहस्पतिः प्रीयताम्॥ ५॥

ॐ अन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिबत्क्षत्त्रं पयः सोमं प्रजापतिः। ऋतेन सत्यमिन्द्रियं विपानर्ठ० शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयो मृतं मधु॥ ॐ शुक्राय नमः। शुक्राय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इन्द्रेन्द्राणीरूपाधिदेवता-प्रत्यधिदेवतासहिताय इमं सदीपदधिमाषभक्तबलिं समर्पयामि। भो शुक्र! इमं बलिं गृहाण मम सकुटुम्बस्य सपरिवारस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव। अनेन बलिदानेन शुक्रः प्रीयताम्॥ ६॥

ॐ शं नो देवीरभिष्टय आपो भवन्तु पीतये। शं यो रभिस्त्रवन्तु नः॥ ॐ शनैश्चराय नमः। शनैश्चराय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय यमप्रजापतिरूपाधिदेवता-प्रत्यधिदेवतासहिताय इमं सदीपदधिमाषभक्तबलिं समर्पयामि। भो शनैश्चर! इमं बलिं गृहाण मम सकुटुम्बस्य सपरिवारस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव। अनेन बलिदानेन शनैश्चरः प्रीयताम्॥ ७॥

ॐ कया नश्चित्र आभुवदूती सदावृधः सखा। कया शचिष्ठया वृता॥ ॐ राहवे नमः। राहवे साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय कालसर्परूपाधिदेवता-प्रत्यधिदेवतासहिताय इमं सदीपदधिमाषभक्तबलिं समर्पयामि। भो राहो! इमं बलिं गृहाण मम सकुटुम्बस्य सपरिवारस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव। अनेन बलिदानेन राहुः प्रीयताम्॥ ८॥

ॐ केतुं कृण्वन्नकेतवे पेशो मर्य्या अपेशसे समुषद्भिरजायथाः॥ ॐ केतवे नमः। केतवे साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय चित्रगुप्तब्रह्मरूपाधिदेवता-प्रत्यधिदेवतासहिताय इमं सदीपदधिमाष-

भक्तबलिं समर्पयामि। भो केतो! इमं बलिं गृहाण मम सकुटुम्बस्य सपरिवारस्य आयु:कर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव। अनेन बलिदानेन केतुः प्रीयताम्॥ ९॥

## पञ्चलोकपालबलि:

ॐ गणानां त्वा गणपतिर्ठ० हवामहे प्रियाणां त्वा प्रियपतिर्ठ० हवामहे निधीनां त्वा निधिपतिर्ठ० हवामहे वसो मम। आहमजानि गर्भधमा त्वमजासि गर्भधम्॥ ॐ गणपतये नमः। गणपतये साङ्गाय सपरिवाराय सायुधाय०। भो गणपते! इमं बलिं गृहाण मम सकुटुम्बस्य सपरिवारस्य०। अनेन बलिदानेन गणपतिः प्रीयताम्॥ १॥

ॐ अम्बे ऽअम्बिकेऽम्बालिके न मा नयति कश्चन। ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम्॥ ॐ दुर्गायै नमः। दुर्गायै साङ्गायै सपरिवारायै०। भो दुर्गे! इमं बलिं गृहाण मम सकुटुम्बस्य सपरिवारस्य आयुः कर्त्री क्षेमकर्त्री शान्तिकर्त्री पुष्टिकर्त्री तुष्टिकर्त्री वरदा भव। अनेन बलिदानेन दुर्गा प्रीयताम्॥ २॥

ॐ वायो ये ते सहस्त्रिणो रथासस्तेभिरागहि। नियुत्वान्सोमपीतये॥ ॐ वायवे नमः। वायवे साङ्गाय सपरिवाराय सायुधाय०। भो वायो! इमं बलिं गृहाण मम सकुटुम्बस्य सपरिवारस्य०। अनेन बलिदानेन वायुः प्रीयताम्॥ ३॥

ॐ घृतं घृतपावनः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा। दिशः प्रदिश आदिशो विदिश उद्दिशो दिग्भ्यः स्वाहा॥ ॐ आकाशाय नमः। आकाशाय साङ्गाय सपरिवाराय सायुधाय०। भो आकाश! इमं बलिं गृहाण मम सकुटुम्बस्य सपरिवारस्य०। अनेन बलिदानेन आकाशः प्रीयताम्॥ ४॥

ॐ या वां कशा मधुमत्यश्विना सूनृतावती। तया यज्ञं मिमिक्षतम्॥ ॐ अश्विभ्यां नमः। अश्विभ्यां साङ्गाभ्यां सपरिवाराभ्यां सायुधाभ्यां

सशक्तिकाभ्यां इमं सदीपदधिमाषभक्तबलिं समर्पयामि। भो अश्विनौ! इमं बलिं गृहाण मम सकुटुम्बस्य सपरिवारस्य आयु० कर्तारौ क्षेमकर्तारौ शान्तिकर्तारौ पुष्टिकर्तारौ तुष्टिकर्तारौ वरदौ भवतम्। अनेन बलिदानेन अश्विनौ प्रीयेताम्॥ ५॥

## वास्तोष्पतिबलिः

ॐ वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशो ऽअनमीवा भवो नः। यत्वेमहे प्रति तन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे॥ ॐ वास्तोष्पतये नमः। वास्तोस्पतये साङ्गाय सपरिवाराय सायुधाय०। भो वास्तोष्पते! इमं बलिं गृहाण मम सकुटुम्बस्य सपरिवारस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव। अनेन बलिदानेन वास्तोष्पतिः प्रीयताम्॥

(अथवा)

## एकतन्त्रेण नवग्रहबलिः

ॐ ग्रहा ऽऊर्ज्जाहुतयो व्वयन्तो विप्राय मतिम्। तेषां व्विशिप्रियाणां व्वोऽहमिषमूर्ज्जंठं० समग्ग्रभमुपयामगृहीतोऽसीन्द्राय त्त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्त्वा जुष्टतमम्॥

ॐ सूर्यादिनवग्रहेभ्यो नमः। सूर्यादिनवग्रहेभ्यः साङ्गेभ्यः सपिरवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः अधिदेवता-प्रत्यधिदेवता-गणपत्यादिपञ्चलोक-पालवास्तोष्पतिसहितेभ्यः इमं सदीपदधिमाषभक्तबलिं समर्पयामि।

भो भो सूर्यादिनवग्रहाः! साङ्गाःसपरिवाराः सायुधाः सशक्तिकाः अधिदेवता-प्रत्यधिदेवताः गणपत्यादिपञ्चलोकपाल-वास्तोष्पति-सहिताः इमं बलिं गृह्णीत मम सकुटुम्बस्य सपरिवारस्य आयुःकर्तारः क्षेमकर्तारः शान्तिकर्तारः पुष्टिकर्तारः तुष्टिकर्तारो वरदा भवत्। अनेन बलिदानेन साङ्गाः सूर्यादिनवग्रहाः प्रीयन्ताम्।

## वास्तुबलिः

ॐ वास्तोष्पते प्रति जानीह्यस्मान् स्वावेशो अनमीवोभवा नः। यत्वे महे प्रति तं नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे॥

शिख्यादिसहितवास्तोष्पतये साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदिपदधिमाषभक्तबलिं समपर्यामि।

भो शिख्यादिसहितवास्तोष्पते! इमं बलि गृह्णीत मम सकुटुम्बस्य सपरिवारस्य आयुकर्ता क्षेमकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भवत्। अनेन बलिदानेन शिख्यादिसहितवास्तोष्पतिः प्रीयताम्॥

## योगिनीबलिः

ॐ योगे योगे तवस्तरं वाजे वाजे हवामहे। सखाय इन्द्रमूतये॥ महाकाली - महालक्ष्मी - महासरस्वतीसहितगजाननाद्यावाहितचतुः षष्टि- योगिनीभ्यः साङ्गाभ्यः सपरिवाराभ्यः सायुधाभ्यः सशक्तिकाभ्यः इमं सदीपदधिमाषभक्तबलिं समर्पयामि।

भो महाकाली - महालक्ष्मी - महासरस्वतीसहितचतुःषष्टियोगिन्यः! इमं बलिं गृह्णीत मम सकुटुम्बस्य सपरिवारस्य आयुःकर्त्र्यः, क्षेमकर्त्र्यः, शान्तिकर्त्र्यः, पुष्टिकर्त्र्यः तुष्टिकर्त्र्यः वरदा भवत्। अनेन बलिदानेन महाकाली महालक्ष्मी महासरस्वतीसहितगजाननाद्यावाहितचतुःषष्टि-योगिन्यः प्रीयन्ताम्।

## ( प्रधानदेवताबलिः )

## श्रीधूमावतीबलिः

आचार्य और ब्राह्मण धूमावती देवी के वैदिक मन्त्र का उच्चारण करे—
ॐ धूम्रा बभ्रुनीकाशा पितॄणाꣳ सोमवतां बभ्रवो धूम्रनीकाशाः पितॄणां बर्हिषदां कृष्णा बभ्रुनीकाशाः पितॄणामग्निष्वात्तानां कृष्णाः पृषन्त-स्त्रैयम्बकाः॥

तदुपरान्त आगे दिए हुए वाक्यों का उच्चारण यजमान से करवाकर बलि प्रदान करावें—

ॐ धूमावत्यै नमः। धूमावत्यै साङ्गायै सपरिवारायै सायुधायै सशक्तिकायै इमं सदीपदधिमाषभक्तबलिं समर्पयामि।

भो धूमावति! इमं बलिं गृहाण मम सकुटुम्बस्य सपरिवारस्य आयुःकर्त्री क्षेमकर्त्री शान्तिकर्त्री पुष्टिकर्त्री तुष्टिकर्त्री वरदा भव। अनेन बलिदानेन श्रीधूमावती प्रीयतां न मम।

## क्षेत्रपालबलयः

संकल्पः—यजमानः दक्षिणहस्ते जलाऽक्षत-द्रव्यं चादाय, सङ्कल्पं कुर्यात्–देशकालौ सङ्कीर्त्य, अमुकगोत्रोऽमुकशर्माहम् (वर्माऽहम्, गुप्तोऽहम्, दासोऽहम्) सपत्नीकोऽहं अस्य धूमावतीहवनकर्मणः साङ्गतासिद्ध्यर्थं क्षेत्रपालादिप्रीत्यर्थं भूत-प्रेत-पिशाचादिनिवृत्यर्थं च सार्वभौतिक-बलिप्रदानं करिष्ये।

एक बाँस आदि के पात्र में कुशों को बिछाकर उसके ऊपर मनुष्य के आहार के चौगुना अथवा दोगुना अथवा दही, उड़द और जलपात्र रखकर चतुर्मुख दीप जलाकर निम्न मन्त्र का उच्चारण करें—

ॐ नहि स्पशमविदन्नन्यमस्माद्वैश्वानरात्पुरएतारमग्नेः। एमेनमवृधन्नमृता अमर्त्यं वैश्वानरं क्षैत्रजित्याय देवाः॥

'ॐ क्षेत्रपालाय नमः' यह कहकर क्षेत्रपाल की षोडशोपचार अथवा पञ्चोपचार से पूजा करके निम्न श्लोकों का उच्चारण करके प्रार्थना करें—

नमो वै क्षेत्रपालस्त्वं भूतप्रेतगणैः सह।
पूजां बलिं गृहाणेमं सौम्यो भव च सर्वदा॥
पुत्रान् देहि धनं देहि सर्वान् कामांश्च देहि मे।
आयुरारोग्यं मे देहि निर्विघ्नं कुरु सर्वदा॥

यजमानः बलिदानार्थं दक्षिणहस्ते जलं गृहीत्वा—क्षेत्रपालाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय मारीगण-भैरव-राक्षस-

कूष्माण्ड-वेताल-भूत-प्रेत-पिशाच-डाकिनी-शाकिनी-पिशाचिनी-ब्रह्मराक्षस-गणसहिताय इमं कुङ्कुमरक्तपुष्पादियुतं सदीपं सताम्बूलं सदक्षिणं दधि-माष-भक्तबलिं समर्पयामि। भोः क्षेत्रपाल! सर्वतो दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य आयुः कर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता वरदो भव। अनेन बलिदानेन क्षेत्रपालः प्रीयताम्।

बलिं गृहणन्त्विमे देवा आदित्या वसवस्तथा।
मरुतश्चाश्विनौ रुद्राः सुपर्णाः पन्नगाः खगाः (नगाः)॥ १॥
असुरा यातुधानाश्च पिशाचोरगरक्षसाः।
डाकिन्यो यक्षवेताला योगिन्यः पूतनाः शिवाः॥ २॥
जृम्भकाः सिद्धगन्धर्वाः सौम्या विद्याधरानगाः।
दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः॥ ३॥
जगतां शान्तिकर्तारो ब्रह्माद्याश्च महर्षयः।
मा विघ्नं मा च मे पापं मा सन्तु परिपन्थिनः॥
सौम्या भवन्तु तृप्ताश्च भूत-प्रेताः सुखावहाः॥ ४॥
भूतानि यानीह वसन्ति तानि बलिं गृहीत्वा विधिवत्प्रयुक्तम्।
अन्यत्र वासं परिकल्पयन्तु रक्षन्तु मां तानि सदैव चात्र॥ ५॥

ततो दुर्ब्राह्मणेन नापितेन (शूद्रेण) वा क्षेत्रपालबलिं गृहीत्वा यजमान-मस्तकोपरि सकृत् भ्रामयित्वा चतुष्पथे निःक्षिपेत्। ततो आचार्यः—

ॐ हिङ्काराय स्वाहा हिङ्कृताय स्वाहा क्रन्दते स्वाहा वक्क्रन्दाय स्वाहा प्रोथते स्वाहा प्रप्रोथाय स्वाहा गन्धाय स्वाहा घ्राताय स्वाहा निविष्ट्टाय स्वाहो पविष्ट्टाय स्वाहा सन्दिताय स्वाहा वल्गते स्वाहासीनाय स्वाहा शयानाय स्वाहा स्वपते स्वाहा जाग्रते स्वाहा कूजते स्वाहा प्रबुद्धाय स्वाहा विजृम्भमाणाय स्वाहा विचृत्ताय स्वाहा सठं० हानायस्वाहोपस्थिताय स्वाहा ऽयनाय स्वाहा प्रायणाय स्वाहा॥ इति मन्त्रेण यजमानमस्तकोपरि जलं प्रक्षिपेत्।

## पूर्णाहुतिः

सङ्कल्पः—देशकालौ सङ्कीर्त्य, अमुकगोत्रोऽमुकशर्माऽहम् ( वर्माऽहम्, गुप्तोऽहम्, दासोऽहम् ) कृतस्य धूमावतीहवनकर्मणः साङ्गतासिद्ध्यर्थं तत्सम्पूर्णफलप्राप्त्यर्थं च मृडनामाग्नौ पूर्णाहुतिं होष्यामि।

यजमानः रक्तवस्त्रवेष्टितं श्रीफलं ( नारिकेलफलं ) स्रुच्यामुपरि-संस्थाप्य 'ॐ पूर्णाहुत्यै नमः' इति यथोपचारद्रव्यैः श्रीफलं सम्पूजयेत्। पश्चात् श्रीफलसहितां स्रुची गृहीत्वा उत्थाय पूर्णाहुतिं कुर्यात्।

## पूर्णाहुतिमन्त्राः

ॐ समुद्रादूर्मिर्मधुमाँ२॥ उदारदुपाठं०शुना सममृतत्वमानट्। घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानां मृतस्य नाभिः॥ १॥

वयं नाम प्रब्रवामा घृतस्यास्मिन्यज्ञे धारयामा नमोभिः। उप ब्रह्मा शृणवच्छस्यमानं चतुःशृङ्गोऽवमीद्गौर एतत्॥ २॥

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य। त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ २॥ आविवेश॥ ३॥

---

**भावार्थ**—गाय के स्तनरूप समुद्र से दूध की मधुर ऊर्मि उद्गमित होती है। वह अग्नि के संयोग से अमृतत्व को प्राप्त हो जाती है। घृत का जो प्रिय नाम है, वह देवों की जिह्वा को चंचल बना देने के लिए पर्याप्त है और अमरणत्व का निबन्धक है॥ १॥

हम घृत के नाम का उच्चारण करते हैं और उसे इस यज्ञ में अन्नों के साथ धरते हैं। प्रशंसा किये जाते हुए इस घृत को ब्रह्मा सुनें। चार ऋत्विजरूपी सींगों वाला यह 'गौर' यज्ञ अब ध्यान कर रहा है॥ २॥

इस यज्ञ-वृषभ के चार ऋत्विज ही चार सींग हैं, तीन वेद ही तीन पैर हैं, हविर्धान और प्रवर्ग्य ही दो शिर हैं तथा सात छन्द ही सात हाथ हैं। तीन सवनों में प्रतिबद्ध यह यज्ञ-वृषभ तुमुल वेदनाद करता है। इस प्रकार यह महान् यज्ञदेव मनुष्यों में प्रविष्ट हो गये हैं॥ ३॥

त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दन्। इन्द्र एकर्ठ० सूर्य एकं जजान वेनादेकर्ठ० स्वधया निष्टतक्षुः ॥ ४॥

एता अर्षन्ति हृद्यात्समुद्राच्छतव्रजा रिपुणा नावचक्षे। घृतस्य धारा अभिचाकशीमि हिरण्ययो वेतसो मध्य आसाम्॥ ५॥

सम्यक् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः। एते अर्षन्त्यूर्मयो घृतस्य मृगा इव क्षिपणो रीषमाणाः॥ ६॥

सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः। घृतस्य धारा अरुषो न वाजी काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः॥ ७॥

अभिप्रवन्त समनेव योषाः कल्याण्यः स्मयमानासो अग्निम्। घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्यति जातवेदाः॥ ८॥

---

**भावार्थ**—तीन प्रकार से धरे हुए और पणियों से छिपाये गये घृत को अन्त में देवों ने गाय में ही प्राप्त किया। उस घृत के एक भाग को इन्द्र ने और एक भाग को सूर्य ने उत्पन्न किया। तृतीय भाग को द्विजातियों ने स्वधा के द्वारा यज्ञसाधक अग्नि की सहायता से सम्पादित किया॥ ४॥

दुग्ध की तरह यह धाराएँ, गाय के हृदय समुद्र से उठती हैं। शत-शत गामिनी यह धाराएँ शत्रु के द्वारा कभी तिरस्कृत नहीं देखी जातीं। मैं घृत की धाराओं को देखता हूँ। घृत की इन धाराओं के मध्य ही तो वह सुनहला अग्नि स्थित है॥ ५॥

हृदय के अन्दर मन से ही पवित्र होती हुई गाएँ इन घृत की धाराओं को सम्यक् प्रस्रवित करती हैं, जैसे नदियाँ जल धाराओं को। घृत की यह लहरें ऐसी उछल रही हैं, मानों व्याध से भयभीत पलायन पर मृग भाग रहे हों॥ ६॥

विषम प्रदेश में महानद की क्षिप्र लहरें जिस प्रकार गिरकर नष्ट हो जाती हैं तथा जिस प्रकार सीमा को पार करके घुड़दौड़ का घोड़ा बाहर निकल जाता है उसी प्रकार यह घृत की महती धाराएँ भी लहरों में उमड़ती हुई गिर रही हैं॥ ७॥

कल्याण चाहने वाली, हँसती हुई एवं प्रसन्नचित्त स्त्रियाँ जिस प्रकार अपने प्रियतम को प्राप्त होती हैं, उसी प्रकार यह घृतधाराएँ अग्नि को सम्प्राप्त होती हैं। घृत की धाराएँ समिधाओं में समा जाती हैं। उनका सेवन करते हुए जातप्रज्ञ अग्नि अति प्रसन्न होता है॥ ८॥

कन्या इव वहतुमेतवा उ अञ्ज्यञ्जाना अभिचाकशीमि। यत्र सोमः सूयते यत्र यज्ञो घृतस्य धारा अभि तत्पवन्ते॥ ९॥

अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त। इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत्पवन्ते॥ १०॥

धामन्ते विश्वं भुवनमधि श्रितमन्तः समुद्रे हृद्यन्तरायुषि। अपामनीके समिथे य आभृतस्तमश्याम मधुमन्तं त ऊर्मिम्॥ ११॥

पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः। घृतेन त्वं तन्वं वर्धयस्व सत्याः सन्तु यजमानस्य कामाः॥ १२॥

मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम्। कविर्ठ० सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः॥ १३॥

---

**भावार्थ**—पति के घर की ओर जाने के लिए कन्यायें स्वयं को काजल-आभरणादि से सजाती हैं, उसी प्रकार इन घृतधाराओं को मैं भी देखता हूँ। जहाँ-जहाँ सोमरस पावित होता है तथा जहाँ यज्ञ प्रवर्तित होता है, उसी देश को घृत की धाराएँ पवित्र बना देती हैं॥ ९॥

हे देवों! तुम शोभनस्तुति तथा घृतमय यज्ञ को सम्प्राप्त होओ। आकर हममें धनों को धारित करो। हमारे इस सौत्रामणियाग को देवों में प्राप्त बनाओ। यह मधुर घृत की धाराएँ अग्नि में गिर रही हैं—उन्हें भी देवों में प्राप्त बनाओ॥ १०॥

हे अग्ने! यह समस्त ब्रह्माण्ड ही तुम्हारी व्याप्ति के अन्दर स्थित है। समुद्र के अन्दर, हृदय के अन्दर और आयुष्य में। जलों के मुख एवं युद्ध में तेजोरूप जो घृत भरा हुआ है—तुम्हारी उस मधुर तरंग घृत को हम आस्वादित करें॥ ११॥

हे अग्ने! तुम उपशान्त को आदित्य-रुद्र-वसुगण पुनः प्रज्वलित करें और धन के नेता अग्ने! यज्ञों के द्वारा यजमान पुरोहितादि भी तुम्हें पुनः-पुनः प्रबुद्ध करें। घृत से तुम अपने ज्वाला-शरीर को बढ़ाओ। तुम्हारी पृथ्वी पर हमारे इस यजमान के सर्वसंकल्प सफल होवे॥ १२॥

द्युलोक की मूर्धाभूत, पृथ्वी को व्याप्त करनेवाले और यज्ञ में उत्पन्न वैश्वानर अग्नि को कवि, सम्राट्, यजमानों के अतिथि और ज्वालारूप मुख में स्रुवापात्र को लगाए रखने वाले इस अग्नि को ऋत्विज उत्पन्न करते हैं॥ १३॥

पूर्णा दर्वि परापत सुपूर्णा पुनरापत। वस्नेव विक्रीणावहा इषमूर्जर्ठ० शतक्रतो॥ १४॥

इदमग्नये वैश्वानराय वसुरुद्रादित्येभ्यः शतक्रतवे सप्तवते अग्नये अद्भ्यश्च न मम।

## वसोर्द्धाराहोमः

सङ्कल्पः—देशकालौ सङ्कीर्त्य, अमुकगोत्रोऽमुकशर्माहम् ( वर्माऽहम्, गुप्तोऽहम्, दासोऽहम् ) कृतस्य धूमावतीहवनकर्मणः साङ्गतासिद्ध्यर्थं तत्सम्पूर्णफलप्राप्त्यर्थं च वसोर्द्धारां होष्यामि।

इति सङ्कल्प्य कुण्डोपरि वसोर्द्धारां प्रागग्रां निधाय तदुपरि घृत-पूरितेन ताम्रादिपात्रधृतेनाधोयवमात्रछिद्रेणाज्यं विमुञ्चतोऽग्नेरुपरि वसोर्द्धारां पातयेत्। वसोर्द्धारायाः मुखं सुवर्णनिर्मितजिह्वां बध्नीयात्। तस्यां च घृतधारायां पतन्त्यां स्रुक्प्रणालिकयाऽग्नौ पतन्त्यां इमान् मन्त्रान् पठेत्।

## वसोर्द्धाराहवनमन्त्राः

ॐ सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त ऋषयः सप्त धाम प्रियाणि। सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्व घृतेन स्वाहा॥ १॥

शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्माँश्चा शुक्रश्च ऋतपाश्चात्यर्ठ० हाः॥ २॥

---

**भावार्थ**—हे कल्छुल! तुम पतीली से भरी हुई निकल कर इन्द्र के लिए आगे बढ़ो और उसके पास पुनः अभीष्ट फल के साथ वापस आओ। हे शतयज्ञ इन्द्र! मूल्य के विनियम के तुल्य हम दोनों वर्षा और अन्न का व्यापार करते हैं॥ १४॥

**वसोर्द्धाराहवनमन्त्र का भावार्थ**—हे अग्ने! तुम्हारी सात समिधाएँ हैं, सात ज्वाला जिह्वाएँ हैं, सात ऋषि हैं और सात ही प्रिय गायत्री प्रभृति छन्द स्थान हैं। सात ऋत्विज तुम्हें सात अग्निष्टोमादि यज्ञ-विधानों के द्वारा यजन करते हैं। हे अग्ने! तुम सात चिति वाली वेदि को घृत से आपूरित करो। यह आहुति है॥ १॥

शुक्रज्योति, चित्रज्योति, सत्यज्योति, ज्योतिषमान्, शुक्र, ऋतपा और पाप के परे विद्यमान सप्तम मरुत अपने-अपने सप्तगण के साथ हमारे यज्ञ में आवें॥ २॥

